**वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥६५॥**

**स्त्री पुंवच्च ॥ ६६ ॥**

**पुमान्स्त्रिया ॥ ६७ ॥**

**भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६८ ॥**

१ असरूपाणां युवस्त्रीपुंसानां विशेषस्याविवक्षितत्वात्सामान्यस्य च विवक्षितत्वात्सिद्धम् ।

२ ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्य विभक्तिपरस्य विशेषवाचकत्वादनेकशेषः ।

**नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ ६९ ॥**

१ प्रधाने कार्यसंप्रत्ययाच्छेषः ।

२ आकृतिवाचित्वादेकवचनम् ।

**पिता मात्रा ॥ ७० ॥**

**श्वशुरः श्वश्र्वा ॥ ७१ ॥**

१ भ्रातृपुत्रपितृश्वशुराणां कारणाद्द्रव्ये शब्दनिवेश इति चेत्तुल्यकारणत्वात् सिद्धम् ।

२ दर्शनं हेतुरिति चेत्तुल्यम् ।

३ तद्विषयं च ।

४ अन्यत्रापि तद्विषयदर्शनात् ।

**त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥**

१ त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि ।

२ अद्वन्द्वतत्पुरुषविशेषणानाम् ।

३ त्यदादीनां सामान्यार्थत्वात् ।

४ परस्य चोभयवाचित्वात् ।

५ पूर्वशेषदर्शनाच्च ।

६ सामान्यविशेषवाचिनोश्च द्वन्द्वाभावात् सिद्धम् ।

**ग्राम्यपशुसंघेष्वतरुणेषु स्त्री[5] ॥ ७३ ॥**

इति प्रथमाध्यायस्य द्वितीयः पादः ।

**भूवादयो धातवः ॥ १ ॥**

१ पाठेन धातुसंज्ञायां समानशब्दप्रतिषेधः ।

२ परिमाणग्रहणं च ।

३ क्रियावचन उपसर्गप्रत्ययप्रतिषेधः ।

४ सङ्घातेनार्थगतेः ।

५ अस्तिभवतिविद्यतीनां धातुत्वम् ।

६ प्रत्ययार्थस्याव्यतिरेकात्प्रकृत्यन्तरेषु । धातोश्चार्थाभेदात्प्रत्ययान्तरेषु । [7]सिद्धं त्वन्वयव्यतिरेकाभ्याम् ।

७ क्रियाविशेषक उपसर्गः ।

८ भाववचने तदर्थप्रत्ययप्रतिषेधः ।

९ इतरेतराश्रयं च प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः ।

१० सिद्धं तु नित्यशब्दत्वादनाश्रित्य भाववचनत्वं प्रत्ययः ।

११ प्रथमभावग्रहणं च ।

---

१ प. पुस्तके इतः परमधिकम् भ्रातृपुत्रपितृश्वशुराणां कारणाद् द्रव्ये शब्दनिवेशः । २ प. पुस्तके इतः परमधिकम् दर्शनं वै हेतुः । ३ प. पुस्तके इदमधिकमितःपरम् । न वा एष लोके संप्रत्ययः । ४ इदं प. पुस्तके नास्ति । ५ प. पुस्तके इतः परमधिकं वार्तिकम् । अनेकशफेष्विति वक्तव्यम् । प. पुस्तके इतः परमधिकम् । भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते । ७ सिद्धं तु इत्यधिकं कीलहॉर्नपाठे । अपि तूत्तमेषु हस्तलिखितेषु न दृश्यते ।

१२ भूवादिपाठः प्रातिपदिकाणपयत्यादिनिवृत्त्यर्थः ।

१३ स्वरानुबन्धज्ञापनाय च ।

**उपदेशेऽजनुनासिक इत् ॥ २ ॥**

१ इत्संज्ञायां सर्वप्रसङ्गोऽविशेषात् ।

२ सिद्धं तूपदेशनेऽनुनासिकवचनात् ।

**हलन्त्यम् ॥ ३ ॥**

१ हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वात् ।

२ सिद्धं तु व्यवसितान्त्यत्वात् ।

३ लकारस्यानुबन्धाज्ञापितत्वाद्धल्ग्रहणाप्रसिद्धिः ।

४ सिद्धं तु लकारनिर्देशात् ।

५ एकशेषनिर्देशाद्वा ।

६ प्रातिपदिकप्रतिषेधोऽकृत्तद्धिते ।

७ इदर्थाभावात्सिद्धम् ।

**न विभक्तौ तुस्माः ॥ ४ ॥**

१ विभक्तौ तवर्गप्रतिषेधोऽतद्धिते ।

**आदिर्ञिटुडवः ॥ ५ ॥**

**षः प्रत्ययस्य ॥ ६ ॥**

**चुटू ॥ ७ ॥**

१ चुञ्चुप्चणपोश्चकारप्रतिषेधः ।

२ इदर्थाभावात्सिद्धम् ।

३ पित्करणं किमर्थमिति चेत्पर्यायार्थम् ।

४ इर उपसंख्यानम् ।

५ अवयवग्रहणादिति चेदिदिद्विधिप्रसङ्गः।

**लशक्वतद्धिते ॥ ८ ॥**

**तस्य लोपः ॥ ९ ॥**

१ इतो लोपे णल्क्त्वानिष्ठासूपसंख्यानमित्प्रतिषेधात् ।

२ सिद्धं तु णलादीनां ग्रहणप्रतिषेधात् ।

३ निर्दिष्टलोपाद्वा ।

४ तत्र तुस्मानां प्रतिषेधः ।

५ न वोच्चारणसामर्थ्यात् ।

६ अनुबन्धलोपे भावाभावयोर्विप्रतिषेधादप्रसिद्धिः ।

७ सिद्धं त्वपवादन्यायेन ।

८ भावो हि कार्यार्थोऽनन्यार्थो लोपः ।

९ एकान्तस्तत्रोपलब्धेः ।

१० तत्रासरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वात् ।

११ अनेकान्ते वृत्तिविशेषः ।

१२ अनन्तर इति चेत्पूर्वपरयोरित्कृतप्रसङ्गः ।

१३ सिद्धं तु व्यवसितपाठात् ।

१४ इतरथा ह्येकान्तेऽपि संदेहः ।

१५ वृत्ताद्वा ।

**यथासंख्यमनुदेशः समानाम् ॥ १० ॥**

१ संज्ञासमासनिर्देशात्सर्वप्रसङ्गोऽनुदेशस्य तत्र यथासंख्यवचनं नियमार्थम् ।

२ संज्ञासमासनिर्देशःपृथग्विभक्ति संज्ञ्यनुचरणार्थः ।

३ प्रकरणे च सर्वसंप्रत्ययार्थः ।

४ संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्यायवायाव एच इत्यनिर्देशः ।

१ प. पुस्तके हलः परमाधिकम् । अवयवग्रहणात्सिद्धम् ।

५ अर्थतश्चेल्लुटोर्नन्चरीहणसिन्धुतक्षशि-
लादिषु दोषः ।
६ आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रह-
णेषु ।
७ एङः पूर्वत्वे प्रतिषेधः ।
८ अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति ।
९ उदिकूले रुजिवहोः ।
१० तच्छीलादिषु धातुत्रिग्रहणेषु ।
११ घञादिषु द्विग्रहणेषु ।
१२ अवे तॄस्त्रोः करणाधिकरणयोः ।
१३ कर्तृकर्मणोश्च भूकृञोः ।
१४ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ।
१५ कृम्वोः क्त्वाणमुलौ ।
१६ अधीयानविदुषोश्छन्दोब्राह्मणानि ।
१७ रोपधेतोः पथिदूतयोः ।
१८ तत्र भवस्तस्य व्याख्यानः क्रतुयज्ञेभ्यश्च ।
१९ संघादिष्वञ्प्रभृतयः ।
२० वेशोयशआदेर्भगाद्यल्खौ ।
२१ ङसिङसोः ख्यत्यात्परस्य ।
२२ न वा समानयोगवचनात् ।
२३ तस्य दोषो विदो लटो वा ।
२४ ध्माधेटोर्नाडीमुष्ट्योश्च ।
२५ खलगोरथादिनित्रकट्यचश्च ।
२६ सिन्ध्वपकाराभ्यां कन् अणञौ च ।
२७ युष्मदस्मदोश्चादेशाः ।

**स्वरितेनाधिकारः ॥ ११ ॥**

१ अधिकारः प्रतियोगं तस्यानिर्देशार्थः ।
२ न वा निर्दिश्यमानाधिकृतत्वाद्यथा लोके ।
३ अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषा ।
४ अधिकारपरिमाणाज्ञानं तु ।
५ अधिकारपरिमाणाज्ञानार्थं तु[1] नाधिकार
इति चेदुक्तम् ।
६ यावतिथोऽलनुबन्धस्तावतो योगाननति-
वचनात्सिद्धम् ।
७ भूयसि प्राग्वचनम्[2] ।

**अनुदात्तङित आत्मनेपदम् ॥ १२ ॥**

१ आत्मनेपदवचनं नियमार्थम् ।
२ लविधानाद्विहितम् ।
३ तत्र प्रत्ययनियमे शेषवचनं परस्मैपद-
स्यानिवृत्तत्वात् ।
४ क्यष आत्मनेपदवचनं तस्यान्यत्र नि-
यमात् ।
५ प्रकृत्यर्थनियमेऽन्याभावः ।
६ शेषवचनं च ।
७ कर्तरि चात्मनेपदविषये परस्मैपदप्रतिषे-
धार्थम्[3] ।

**भावकर्मणोः ॥ १३ ॥**

**कर्तरि कर्मव्यतिहारे ॥ १४ ॥**

१ कर्मव्यतिहारादिषु कर्तृग्रहणं भावकर्म-
निवृत्त्यर्थम् ।
३ न वानन्तरस्य प्रतिषेधात् ।

**न गतिहिंसार्थेभ्यः ॥ १५ ॥**

१ प्रतिषेधे हसादीनामुपसंख्यानम् ।
२ हरिवह्योरप्रतिषेधः ।

---

१ प. पुस्तके इतः परं नास्ति । २ प. पुस्तके इतः परमधिकम् । विकरणेभ्यः प्रतिषेधः । ३ प. पुस्तके इतः परमधिकम् । क्रियाव्यतिहार इति वक्तव्यम् ।

इतरेतरान्योऽन्योपपदाच्च ॥ १६ ॥

१ परस्परोपपदाच्च ।

नेर्विशः ॥ १७ ॥

परिव्यवेभ्यः क्रियः ॥ १८ ॥

विपराभ्यां जेः ॥ १९ ॥

आङो दोऽनास्यविहरणे ॥ २० ॥

१ आङो दोऽव्यसनक्रियस्य ।

२ स्वाङ्गकर्मकाच्च ।

क्रीडोऽनुसंपरिभ्यश्च ॥ २१ ॥

१ समोऽकूजने ।

२ आगमेः क्षमायाम् ।

३ शिक्षेर्जिज्ञासायाम् ।

४ किरतेर्हर्षजीविकाकुलायकरणेषु ।

५ हरतेर्गतताच्छील्ये ।

६ आङि नुप्रच्छयोः ।

७ आशिषि नाथः ।

८ शप उपलम्भने ।

समवप्रविभ्यः स्थः ॥ २२ ॥

१ आङः स्थः प्रतिज्ञाने ।

प्रकाशनस्थेयाख्ययोश्च ॥ २३ ॥

उदोऽनूर्ध्वकर्मणि ॥ २४ ॥

१ उद ईहायाम् ।

उपान्मन्त्रकरणे ॥ २५ ॥

१ उपाद्देवपूजासंगतकरणयोः[1] ।

२ वा लिप्सायाम् ।

अकर्मकाच्च ॥ २६ ॥

उद्विभ्यां तपः ॥ २७ ॥

१ स्वाङ्गकर्मकाच्च ।

आङो यमहनः ॥ २८ ॥

समो गम्यृच्छिभ्याम् ॥ २९ ॥

१ समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम् ।

२ अर्तिश्रुदृशिभ्यश्च ।

३ उपसर्गादस्यत्यूह्योर्वावचनम् ।

निसमुपविभ्यो ह्वः ॥ ३० ॥

स्पर्धायामाङः ॥ ३१ ॥

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३२ ॥

अधेः प्रसहने ॥ ३३ ॥

वेः शब्दकर्मणः ॥ ३४ ॥

अकर्मकाच्च ॥ ३५ ॥

संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ ३६ ॥

कर्तृस्थे चाशरीरे कर्मणि ॥ ३७ ॥

वृत्तिसर्गतायनेषु क्रमः ॥ ३८ ॥

उपपराभ्याम् ॥ ३९ ॥

आङ उद्गमने ॥ ४० ॥

१ ज्योतिषामुद्गमने ।

वेः पादविहरणे ॥ ४१ ॥

प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥

अनुपसर्गाद्वा ॥ ४३ ॥

अपह्नवे ज्ञः ॥ ४४ ॥

अकर्मकाच्च ॥ ४५ ॥

संप्रतिभ्यामनाध्याने ॥ ४६ ॥

१ प. पुस्तके इतः परमधिकम् । उपसर्गग्रहणम् । २ प. पुस्तके इतः परमधिकम् । °मित्रकरणपथिष्विति वक्तव्यमित्यपर आह ।

**भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४७ ॥**

**व्यक्तवाचां समुच्चारणे ॥ ४८ ॥**

**अनोरकर्मकात् ॥ ४९ ॥**

**विभाषा विप्रलापे ॥५० ॥**

**अवाद्ग्रः ॥ ५१ ॥**

१ अवाद्ग्रो गिरतेः ।

**समः प्रतिज्ञाने ॥५२ ॥**

**उदश्चरः सकर्मकात् ॥ ५३ ॥**

**समस्तृतीयायुक्तात् ॥ ५४ ॥**

**दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥**

**उपाद्यमः स्वकरणे ॥ ५६ ॥**

**ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥**

**नानोर्ज्ञः ॥ ५८ ॥**

१ अनोर्ज्ञः प्रतिषेधे सकर्मकवचनम् ।

२ न वाकर्मकस्योत्तरेण विधानात् ।

३ प्रतिषेधः पूर्वस्य च ।

**प्रत्याङ्भ्यां श्रुवः ॥ ५९ ॥**

**शदेः शितः ॥ ६० ॥**

१ शदे शितः परस्मैपदाश्रयत्वादात्मनेपदाभावः ।

२ सिद्धं तु लडादीनामात्मनेपदवचनात् ।

३ उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानम् ।

४ नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेदटोऽपि नित्यनिमित्तत्वादात्मनेपदाभावः ।

५ तस्मादुपसंख्यानम् ।

**म्रियतेर्लुङ्लिङोश्च ॥ ६१ ॥**

**पूर्ववत्सनः ॥ ६२ ॥**

१ पूर्ववत्सन इति शदिम्रियत्यर्थम् ।

२ इतरथा हि ताभ्यां सनन्ताभ्यामात्मनेपदप्रतिषेधः ।

३ पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदभाव इति चेद्बुधादिष्वप्रसिद्धिः ।

४ सिद्धं तु पूर्वस्य लिङ्गातिदेशात् ।

५ कुञादिषु तु लिङ्गप्रतिषेधः ।

६ प्रत्ययग्रहणं णियगर्थम् ।

७ तत्र हेतुमण्णिचः प्रतिषेधः ।

**आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥६३॥**

**प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ ६४ ॥**

**समः क्ष्णुवः ॥ ६५ ॥**

१ समः क्ष्णुवः सकर्मकार्थम्[१]।

**भुजो ऽनवने ॥ ६६ ॥**

**णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने**

१ णेरात्मनेपदविधानेऽण्यन्तस्य कर्मणस्तत्रोपलब्धिः ।

२ इतरथा हि सर्वप्रसङ्गः ।

३ कर्मकर्तृत्वात्सिद्धमिति चेद्यक्चिणोर्निवृत्त्यर्थं वचनम् ।

४ न वा यक्चिणोः प्रतिषेधात् ।

५ इतरथा हि यत्र नियमस्ततोऽन्यत्र प्रतिषेधः ।

६ आत्मनेपदस्य च ।

१ प. पुस्तके इतःपरमधिकम् । स्वराद्युपसृष्टादिति वक्तव्यम् । स्वराद्यन्तोपसृष्टादिति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । अनवनकौटिल्ययोरिति वक्तव्यम् ।

७ आत्मनेपदप्रतिषेधार्थं तु ।

८ आत्मनः कर्मत्वे प्रतिषेधः ।

९ न वा ण्यन्तेऽन्यस्य कर्तृत्वात् ।

**भीस्म्योर्हेतुभये ॥ ६८ ॥**

**गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥**

**लियः संमाननशालीनीकरणयोश्च ॥७०॥**

**मिथ्योपपदात्कृञोऽभ्यासे ॥ ७१ ॥**

**स्वरितञितः कर्त्रभिप्राये क्रियाफले॥७२॥**

**अपाद्वदः ॥ ७३ ॥**

**णिचश्च ॥ ७४ ॥**

**समुदाङ्भ्यो यमो ऽग्रन्थे ॥ ७५ ॥**

**अनुपसर्गाज्ज्ञः ॥ ७६ ॥**

**विभाषोपपदेन प्रतीयमाने ॥ ७७ ॥**

**शेषात्कर्तरि परस्मैपदम् ॥ ७८ ॥**

१ शेषवचनं पञ्चम्या चेदर्थे प्रतिषेधः।

२ सप्तम्या चेत्प्रकृतेः ।

३ सिद्धं तूभयनिर्देशात् ।

४ कर्तृग्रहणमनुष्यपराद्यर्थम् ।

**अनुपराभ्यां कृञः ॥ ७९ ॥**

१ परस्मैपदप्रतिषेधात्कृञादिषु विधानम्[1]।

२ तत्रात्मनेपदप्रतिषेधोऽप्रतिषिद्धत्वात् ।

३ न वा द्युतादिभ्यो वावचनात् ।

४ आत्मनेपदनियमे वा प्रतिषेधः[2] ।

**अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥**

**प्राद्वहः ॥ ८१ ॥**

**परेर्मृषः ॥८२ ॥**

**व्याङ्परिभ्यो रमः ॥ ८३ ॥**

**उपाच्च ॥ ८४ ॥**

**विभाषाकर्मकात् ॥ ८५ ॥**

**बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥८६ ॥**

**निगरणचलनार्थेभ्यश्च ॥ ८७ ॥**

**अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८८ ॥**

१ अणावकर्मकादिति चुरादिणिचोऽण्यन्तात्परस्मैपदवचनम् ।

२ सिद्धं त्वतस्मिण्णाविति वचनात् ।

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ ८९ ॥**

**वा क्यषः ॥ ९० ॥**

**द्युद्भ्यो लुङि ॥ ९१ ॥**

**वृद्भ्यः स्यसनोः ॥ ९२ ॥**

**लुटि च क्लृपः ॥ ९३ ॥**

१ पादिषु धेट उपसंख्यानम् ।

॥ प्रथमाध्यायस्य तृतीयः पादः ॥

**आ कडारादेका संज्ञा ॥ १ ॥**

१ अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम् ।

२ तत्रैकसंज्ञाधिकारे तद्वचनम् ।

३ अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः ।

४ कर्मधारयत्वे तत्पुरुषग्रहणम्[3] ।

५ तत्पुरुषत्वे द्विगुचग्रहणम् ।

६ गतिदिवःकर्महेतुमत्सु च ग्रहणम् ।

७ गुरुलघुसंज्ञे नदीघिसंज्ञे ।

८ परस्मैपदसंज्ञा पुरुषसंज्ञा ।

९ परवचने सिति पदं भम् ।

१ प. पुस्तके विधानस्य स्थाने वचनमिति । २ प. पुस्तके इतः परमधिकम् । अदेः प्रतिषेधो वक्तव्यः । ३ प. पुस्तके कर्मधारये तत्पुरुषग्रहणमिति ।

१० गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञम् ।
११ शेषवचनं च घिसंज्ञानिवृत्त्यर्थम् ।
१२ न वा संभवात् ।
१३ ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणः ।
१४ तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाभावः ।
१५ आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति चेद्यणादेशाभावः ।
१६ नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञाभावः ।
१७ बहुव्रीह्यर्थं तु
१८ प्रयोजनमव्ययीभावोपमानद्विगुकृल्लोपेषु ।
१९ तत्र शेषवचनाद्दोषः संख्या समानाधिकरणनञ्समासेषु बहुव्रीहिप्रतिषेधः ।
२० कृल्लोपे च शेषवचनात्प्रादिभिर्न बहुव्रीहिः[1] ।
२१ एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिरिति चेत् क्त्वार्थे प्रतिषेधः ।
२२ तत्पुरुष इति चेदन्यत्र क्त्वार्थात्प्रतिषेधः ।
२३ सिद्धं तु प्रादीनां क्त्वार्थे तत्पुरुषवचनात् ।
२४ प्रयोजनं ह्रस्वसंज्ञा दीर्घप्लुतौ ।
२५ तिङ्सार्वधातुकं लिङ्लिटोरार्धधातुकम् ।
२६ अपत्यं वृद्धं युवा ।
२७ घिं नदी ।
२८ लघु गुरु ।
२९ पदं भम् ।
३० अपादानमुत्तराणि धनुषा विध्यति कंसपात्र्यां भुङ्क्ते गां दोग्धि धनुर्विध्यतीति ।
३१ क्रुधद्रुहोरुपसृष्टयोः कर्म संप्रदानम् ।
३२ करणं पराणि साध्वसिश्छिनत्ति ।
३३ अधिकरणं कर्म[4] गेहं प्रविशति ।
३४ अधिकरणं कर्ता । [5]स्थाली पचति ।
३५ अध्युपसृष्टं कर्म ।
३६ गत्युपसर्गसंज्ञे कर्मप्रवचनीयसंज्ञा ।
३७ परस्मैपदमात्मनेपदम् ।
३८ समाससंज्ञाश्च ।
३९ अर्थवत्प्रातिपदिकम् ।
४० गुणवचनं च[6] ।
४१ समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिः ।
४२ संख्या ।
४३ डु च ।
४४ एकद्रव्योपनिवेशिनी संज्ञा ।

**विप्रतिषेधे परं कार्यम् ॥ २ ॥**

१ द्वौ प्रसङ्गावन्यार्थावेकस्मिन्स विप्रतिषेधः
२ एकस्मिन्युगपदसंभवात्पूर्वपरप्राप्तेरुभयप्रसङ्गः ।
३ तृजादिभिस्तुल्यम् ।
४ अनवयवप्रसङ्गात्प्रतिपदं विधेश्च ।

१ प. पुस्तकेऽतः परमधिकम् । एक संज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिः । २-५ प. पुस्तके इतः नास्ति । ६ प. पुस्तके च स्थाने त्विति ।

५ अप्रतिपत्तिर्वोभयोर्तुल्यबलत्वात् ।
६ तत्र प्रतिपत्त्यर्थं वचनम् ।
७ तव्यदादीनां त्वप्रसिद्धिः ।
८ अन्तरङ्गं च ।
९ प्रयोजनं यणेकादेशेत्त्वोत्त्वानि गुणवृद्धि-द्विर्वचनाल्लोपस्वरेभ्यः ।
१० इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात् ।
११ न वा सवर्णदीर्घत्वस्यानवकाशत्वात् ।
१२ ऊङापोरेकादेश ईत्वलोपाभ्याम् ।
१३ आत्वनपुंसकोपसर्जनह्रस्वत्वान्ययवाया-वेकादेशतुग्विधिभ्यः ।
१४ तुग्यणेकादेशगुणवृद्ध्यौत्त्वदीर्घत्वेत्वमु-मेत्त्वरीविधिभ्यः ।
१५ इयङादेशो गुणात् ।
१६ श्वेः संप्रसारणपूर्वत्वं यणादेशात् ।
१७ ह्व आकारलोपात् ।
१८ स्वरो लोपात् ।
१९ प्रत्ययविधिरेकादेशात् ।
२० लादेशो वर्णविधेः ।
२१ तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वरात् ।
२२ तस्य दोषः पूर्वपदोत्तरपदयोर्वृद्धिस्वरावे-कादेशात् ।
२३ यणादेशादियुवौ ।
२४ उसि पररूपाच्च ।
२५ लुग्लोपयणयवायावेकादेशेभ्यः ।

**यू स्त्र्याख्यौ नदी ॥ ३ ॥**

१ नदीसंज्ञायामाख्याग्रहणं स्त्रीविषय-त्वार्थम् ।
२ प्रथमलिङ्गग्रहणं च ।
३ प्रयोजनं क्विप्लुप्समासाः ।
४ अवयवस्त्रीविषयत्वात्सिद्धमिति चेदिय-ङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेध-प्रसङ्गोऽवयस्येयङुवङ्स्थानत्वात् ।
५ सिद्धं त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ तत्प्रतिषेधात् ।
६ ह्रस्वे युण्स्थानप्रवृत्तौ च स्त्रीवचने ।

**नेयङुवङ्स्थानावस्त्री ॥ ४ ॥**

**वामि ॥ ५ ॥**

**ङिति ह्रस्वश्च ॥ ६ ॥**

**शेषो घ्यसखि ॥ ७ ॥**

**पतिः समास एव ॥ ८ ॥**

**षष्ठीयुक्तश्छन्दसि वा ॥ ९ ॥**

**ह्रस्वं लघु ॥ १० ॥**

**संयोगे गुरु ॥ ११ ॥**

**दीर्घं च ॥ १२ ॥**

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।**

१ अङ्गसंज्ञायां तदादिवचनं स्यादिनुमर्थम् ।
२ मित्सुटोरुपसंख्यानम् ।
३ सिद्धं तु तदाद्यादिवचनात् ।
४ तदेकदेशविज्ञानाद्वा सिद्धम् ।
५ प्रत्ययग्रहणं पदादावप्रसङ्गार्थम् ।
६ परिमाणार्थं च ।

---

१ प. पुस्तके इतः परमधिकम् ।अनङानङ्भ्यां चेति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् उवङादेशश्चेति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । यणादेशाच्चेति वक्तव्यम् । ४ प. पुस्तके इतः परमधिकम् । अवयवस्त्रीविषयत्वात्सिद्धम् ।

७ सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादि- तदन्तविज्ञानात् ।

८ प्रयोजनं धातुप्रातिपदिकप्रत्ययसमास- तद्धितविधिस्वराः ।

९ कृद्ग्रहणे गतिकारकपूर्वस्यापि ।

१० प्रयोजनं समासतद्धितविधिस्वराः ।

**सुप्तिङन्तं पदम् ॥ १४ ॥**

१ पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम् ।

**नः क्ये ॥ १५ ॥**

**सिति च ॥ १६ ॥**

**स्वादिष्वसर्वनामस्थाने[1] ॥ १७ ॥**

**यचि भम् ॥ १८ ॥**

१ भसंज्ञायामुत्तरपदलोपे षषः प्रतिषेधः ।

२ सिद्धमचः स्थानिवत्वात् ।

३ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् ।

४ वृषण्वस्वश्वयोः ।

**तसौ मत्वर्थे ॥ १९ ॥**

**अयस्मयादीनि च्छन्दसि[2] ॥ २० ॥**

**बहुषु बहुवचनम् ॥ २१ ॥**

१ सुप्तिङामविशेषविधानादृष्टविप्रयोगत्वाच्च नियमार्थं वचनम् ।

२ तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञा- भावोऽसुबन्तत्वात् ।

३ अर्थनियमे सिद्धम् ।

**द्व्येकयोर्द्विवचनैकवचने ॥ २२ ॥**

**कारके ॥ २३ ॥**

१ कारक इति संज्ञानिर्देशश्चेत्संज्ञिनोऽपि निर्देशः ।

२ इतरथा ह्यनिष्टप्रसङ्गो ग्रामस्य समीपा- दागच्छतीत्यकारकस्य ।

३ कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति ।

४ अपादानं च वृक्षस्य पर्णं पततीति ।

५ न वापायस्याविवक्षितत्वात् ।

६ अन्वर्थमिति चेदकर्तरि कर्तृशब्दानुप- पत्तिः ।

७ सिद्धं तु प्रतिकारकं क्रियाभेदात्पचादीनां करणाधिकरणयोः कर्तृभावः ।

८ अधिश्रयणोदकासेचनतण्डुलावनैधोप- कर्षणक्रियाः प्रधानस्य कर्तुः पाकः ।

९ द्रोणं पचत्याढकं पचतीति संभवनक्रिया धारणक्रिया चाधिकरणस्य पाकः ।

१० एधाः पक्ष्यन्त्या विक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रिया करणस्य पाकः ।

११ उद्यमननिपातनानि कर्तुरिछदिक्रिया ।

१२ यत्तत्र तृणेन तत्परशोश्छेदनम् ।

१३ इतरथा ह्यसितृणयोश्छेदनेऽविशेषः स्यात् ।

१४ अपादानादीनां त्वप्रसिद्धिः ।

१५ न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा ।

**ध्रुवमपाये ऽपादानम् ॥ २४ ॥**

१ जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्

---

१ प. पुस्तके इतः परमधिकम् । नाप्रतिषेधात् । अप्राप्तेर्वा । भुवद्वद्भ्यो धारयद्वद्भ्यः पदसंज्ञा वक्तव्या

२ प. पुस्तके इतः परमाधिकम् । उभयसंज्ञान्यपीति वक्तव्यम् ।

२ गतियुक्तेष्वपादानसंज्ञा नोपपद्यतेऽध्रुवत्वात् ।

३ न वाध्रौव्यस्याविवक्षितत्वात् ।

**भीत्रार्थानां भयहेतुः ॥ २५ ॥**

**पराजेरसोढः ॥ २६ ॥**

**वारणार्थानामीप्सितः ॥ २७ ॥**

१ वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनात् ।

**अन्तर्धौ येनादर्शनमिच्छति ॥ २८ ॥**

**आख्यातोपयोगे ॥ २९ ॥**

१ आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञाप्रसङ्गः ।

२ अकारकमिति चेदुपयोगवचनानर्थक्यम्

**जनिकर्तुः प्रकृतिः ॥ ३० ॥**

**भुवः प्रभवः ॥ ३१ ॥**

**कर्मणा यमभिप्रैति स संप्रदानम् । ३२ ।**

**रुच्यर्थानां प्रीयमाणः ॥ ३३ ॥**

**श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः । ३४ ।**

**धारेरुत्तमर्णः ॥ ३५ ॥**

**स्पृहेरीप्सितः ॥ ३६ ॥**

**क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।३७।**

**क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ ३८ ॥**

**राधीक्ष्योर्यस्य विप्रश्नः ॥ ३९ ॥**

**प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥ ४० ॥**

**अनुप्रतिगृणश्च ॥ ४१ ॥**

**साधकतमं करणम् ॥ ४२ ॥**

**दिवः कर्म च ॥ ४३ ॥**

**परिक्रयणे संप्रदानमन्यतरस्याम् । ४४ ।**

**आधारो ऽधिकरणम् ॥ ४५ ॥**

**अधिशीङ्स्थासां कर्म ॥ ४६ ॥**

**अभिनिविशश्च ॥ ४७ ॥**

**उपान्वध्याङ्वसः ॥ ४८ ॥**

१ वसेरश्यर्थस्य प्रतिषेधः ।

**कर्तुरीप्सिततमं कर्म ॥ ४९ ॥**

१ ईप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञाप्रसङ्गः क्रियेप्सितत्वात् ।

२ न वोभयेप्सितत्वात् ।

**तथा युक्तं चानीप्सितम् ॥ ५० ॥**

**अकथितं च[1] ॥ ५१ ॥**

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ॥ ५२ ॥**

१ शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद्ध्वयत्यादीनां प्रतिषेधः ।

---

१ प. पुस्तके इतः परमधिकम् । क्रियाग्रहणमपि कर्तव्यम् । कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा । २ प. पुस्तके इतः परमधिकम् । दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना । कथिते लादयश्चेत्स्युः षष्ठीं कुर्यात् तदा गुणे । अकारकं ह्यकथितत्वात् । कारकं चेत्तु नाकथा । कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत् । कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे । ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरत । प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनाम् । ण्यन्ते कर्तुश्च कर्मणः । नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च । द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः । सिद्धं वाप्यन्यकर्मणः । अन्यकर्मेति चेद्ब्रूयाल्लादीनामविधिर्भवेत् । कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मकाणाम् । देशश्चाकर्मणां कर्मसंज्ञो भवतीति वक्तव्यम् ।

२ शृणोत्यादीनां चोपसंख्यानमशब्दक्रियत्वात् ।

३ शब्दकर्मण इति चेज्जल्पतिप्रभृतीनामुपसंख्यानम् ।

४ दृशेः सर्वत्र ।

५ अदिखादिनीवहीनां प्रतिषेधः ।

६ वहेरनियन्तृकर्तृकस्य ।

७ भक्षेरहिंसार्थस्य ।

८ अकर्मग्रहणे कालकर्मकाणामुपसंख्यानम्[1] ।

९ सिद्धं तु कालकर्मणामकर्मकवद्वचनात्[2]

**हृक्रोरन्यतरस्याम्** ॥ ५३ ॥

१ हृक्रोर्वावचनेऽभिवादिदृशोरात्मनेपद उपसंख्यानम् ।

**स्वतन्त्रः कर्ता** ॥ ५४ ॥

१ स्वतंत्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानमस्वतन्त्रत्वात् ।

२ न वा स्वातन्त्र्यादितरथा ह्यकुर्वत्यपि कारयतीति स्यात् ।

३ नाकुर्वतीति चेत्स्वतंत्रः ।

**तत्प्रयोजको हेतुश्च** ॥ ५५ ॥

१ प्रैषेऽस्वतंत्रप्रयोजकत्वाद्धेतुसंज्ञाप्रसिद्धिः

२ स्वतन्त्रत्वात्सिद्धमिति चेत्स्वतन्त्रपरतन्त्रत्वं विप्रतिषिद्धम् ।

३ [3]उक्तं वा ।

**प्राग्रीश्वरान्निपाताः**[4] ॥५६॥

१ प्राग्वचनं संज्ञानिवृत्त्यर्थम् ।

**चादयो ऽसत्त्वे** ॥ ५७ ॥

**प्रादय उपसर्गाः क्रियायोगे** ॥ ५८ ॥

॥ ५९ ॥

१ प्रादय इति योगविभागः ।

२ निपातसंज्ञार्थः ।

३ एकयोगे हि निपातसंज्ञाभावः ।

४ मरुच्छब्दस्योपसंख्यानम् ।

५ श्रच्छब्दस्योपसंख्यानम् ।

**गतिश्च** ॥ ६० ॥

१ कारिकाशब्दस्य ।

२ पुनश्चनसौ छन्दसि ।

३ गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रतीति वचनम् ।

४ प्रयोजनं घञ्षत्वणत्वे ।

५ वृद्धिविधौ च धातुग्रहणानर्थक्यम् ।

६ वद्विधिनस्भावावीत्त्वस्वाङ्गादिस्वरणत्वेषु वचनप्रामाण्यात्सिद्धम् ।

७ सुदुरोः प्रतिषेधो नुम्विधितत्त्वषत्वणत्वेषु ।

**ऊर्यादिच्विडाचश्च**[5] ॥ ६१ ॥

**अनुकरणं चानितिपरम्** ॥ ६२ ॥

१ अनुकरणस्येतिकरणपरत्वप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः ।

**आदरानादरयोः सदसती** ॥ ६३ ॥

**भूषणे ऽलम्** ॥ ६४ ॥

**अन्तरपरिग्रहे** ॥ ६५ ॥

---

१ प. पुस्तके °कर्मकाणा° । २ प. पुस्तके इतः परमाधिकम् । स्वतन्त्रत्वात् सिद्धम् । ३ प. पुस्तके नास्ति । ४ प. पुस्तके इतः परमधिकम् । रीश्वराद्वीश्वरान्मा भूत् । कृन्मेजन्तः परोऽपि सः । समासेष्वव्ययीभावः । लौकिकं चातिवर्तते । ५ प. पुस्तके इतः परमधिकम् । कृभ्वस्तियोग इति वक्तव्यम् ।

१ अन्तः शब्दस्याङ्किविधिसमासणत्वेषूपसंख्यानम् ।

**कणेमनसी श्रद्धाप्रतीघाते ॥ ६६ ॥**

**पुरो ऽव्ययम् ॥ ६७ ॥**

**अस्तं च ॥ ६८ ॥**

**अच्छ गत्यर्थवदेषु ॥ ६९ ॥**

**अदो ऽनुपदेशे ॥ ७० ॥**

**तिरो ऽन्तर्धौ ॥ ७१ ॥**

**विभाषा कृञि ॥ ७२ ॥**

**उपाजे ऽन्वाजे ॥ ७३ ॥**

**साक्षात्प्रभृतीनि च ॥ ७४ ॥**

१ साक्षात्प्रभृतिषु च्व्यर्थवचनम् ।

२ मकारान्तत्वं च गतिसंज्ञासंनियुक्तम् ।

३ तत्र च्विप्रतिषेधः ।

४ न वा पूर्वेण कृतत्वात् ।

**अनत्याधान उरसिमनसी ॥ ७५ ॥**

**मध्येपदेनिवचने च ॥ ७६ ॥**

**नित्यं हस्ते पाणावुपयने ॥ ७७ ॥**

**प्राध्वं बन्धने ॥ ७८ ॥**

**जीविकोपनिषदावौपम्ये ॥ ७९ ॥**

**ते प्राग्धातोः ॥ ८० ॥**

१ प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरणपरप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः ।

२ छन्दसि परव्यवहितवचनं च ।

३ संज्ञानियमे सिद्धम् ।

४ उभयोरनर्थकं वचनमनिष्टादर्शनात् ।

५ उपसर्जनसंनिपाते तु पूर्वपरव्यवस्थार्थम् ।

**छन्दसि परे ऽपि ॥ ८१ ॥**

**व्यवहिताश्च ॥ ८२ ॥**

**कर्मप्रवचनीयाः ॥ ८३ ॥**

**अनुर्लक्षणे ॥ ८४ ॥**

१ अनुर्लक्षणेवचनानर्थक्यं सामान्यकृतत्वात् ।

२ हेत्वर्थं तु वचनम् ।

**तृतीयार्थे ॥ ८५ ॥**

**हीने ॥ ८६ ॥**

**उपो ऽधिके च ॥ ८७ ॥**

**अपपरी वर्जने ॥ ८८ ॥**

**आङ् मर्यादावचने[2] ॥ ८९ ॥**

**लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ ९० ॥**

**अभिरभागे ॥ ९१ ॥**

**प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ९२ ॥**

**अधिपरी अनर्थकौ ॥ ९३ ॥**

**सुः पूजायाम् ॥ ९४ ॥**

**अतिरतिक्रमणे च ॥ ९५ ॥**

**अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ ९६ ॥**

**अधिरीश्वरे ॥ ९७ ॥**

---

१ अत्रेदं विकृतं वार्तिकम् । यतः 'छन्दसि परव्यवहितवचनं' चेति भाष्ये वार्तिकपाठः । तथैवास्माभिर्गृहीतो वार्तिकपाठे । अन्यत्र सूत्रत्वेनेदं गृहीतम् । २ च. पुस्तके इतः परमधिकम् । आङ्मर्यादाभिविध्योरिति वक्तव्यम् ।

१ अधिरीश्वरवचन उक्तम् ।

**विभाषा कृञि ॥ ९८ ॥**

**लः परस्मैपदम् ॥ ९९ ॥**

१ लादेशे परस्मैपदग्रहणं पुरुषबाधितत्वात् ।

२ इह वचने हि संज्ञाबाधनम् ।

३ सिचि वृद्धौ तु परस्मैपदग्रहणं ज्ञापकं पुरुषाबाधकत्वस्य ।

**तङानावात्मनेपदम् ॥ १०० ॥**

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०१ ॥**

१ प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं समसंख्यार्थम् ।

२ आनुपूर्व्यवचनं च ।

३ न वैकशेषनिर्देशात् ।

**तान्येकवचनद्विवचनबहुवचनान्येकशः सुपः ॥ १०३ ॥**

**विभक्तिश्च ॥ १०४ ॥**

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०५ ॥**

**प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥**

**अस्मद्युत्तमः ॥ १०७ ॥**

**शेषे प्रथमः ॥ १०८ ॥**

१ युष्मदस्मच्छेषवचनं नियमार्थम् ।

२ तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वात् ।

३ सिद्धं तु युष्मदस्मदोः प्रतिषेधात् ।

४ युष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन ।

५ अनेकशेषभावार्थं तु ।

६ न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेधः ।

७ क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्य ।

**परः संनिकर्षः संहिता ॥ १०९ ॥**

१ परः संनिकर्षः संहिता चेद्द्रुतायामसंहितम् ।

२ तुल्यः संनिकर्षः ।

३ वर्णकालभूयस्त्वं तु ।

४ द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् ।

५ उक्तं वा ।

६ शब्दाविरामे प्रतिवर्णमवसानम् ।

७ ह्रादाविरामे स्पर्शाघोषसंयोगेऽसंनिधानादसंहितम् ।

८ एकेन तुल्यः संनिधिः ।

९ पौर्वापर्यमकालव्यपेतं संहिता चेत्पूर्वापराभावादसंहितम् ।

१० एकैकवर्णवर्तित्वाद्वाच उच्चरितप्रध्वंसित्वाच्च वर्णानाम् ।

**विरामोऽवसानम् ॥ ११० ॥**

१ अभावेऽवसानलक्षण उपर्यभाववचनम् ।

२ विरामे विरामवचनम् ।

३ अभावेऽवसानसंज्ञिन्युपर्यभाववचनम् ।

४ विरामे विरामवचनम् ।

५ भावाविरामभावित्वाच्छब्दस्यावसानलक्षणं न ।

१-२ प. पुस्तके नास्ति ।

६ तत्पर इति वा वर्णस्यावसानम् ।
७ वर्णोऽन्त्यो वावसानम् ।
८ संहितावसानयोर्लोकविदितत्वात्सिद्धम् ।
॥ इति प्रथमाध्यायस्य चतुर्थः पादः ॥

---

## अथ द्वितीयोऽध्यायः ॥

**समर्थः पदविधिः ॥ १ ॥**

१ पृथगर्थानामेकार्थीभावः समर्थवचनम्[1] ।
२ सुबलोपो व्यवधानं यथेष्टमन्यतरेणासंबन्धः स्वरसंख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं चयोगवावचनानर्थक्यं च स्वभावसिद्धत्वात् ।
३ संघातस्यैकार्थ्यान्नावयवसंख्यातः सुबुत्पत्तिः
४ परस्परव्यपेक्षां सामर्थ्यमेके ।
५ तत्र नानाकारकान्निघातयुष्मदस्मदादेशप्रतिषेधः ।
६ प्रचये समासप्रतिषेधः ।
७ समर्थतराणां वा ।
८ समुदायसामर्थ्याद्वा सिद्धम्[2] ।
९ आख्यातं साव्ययकारकविशेषणं वाक्यम्[3]
१० एकतिङ् ।
११ समानवाक्ये निघातयुष्मदस्मदादेशाः ।
१२ योगे प्रतिषेधश्चादिभिः ।
१३ समर्थनिघाते हि समानाधिकरणयुक्तयुक्तेषूपसंख्यानमसमर्थत्वात् ।
१४ राजगवीक्षीरे द्विसमासप्रसङ्गो द्विषष्ठीभावात् ।
१५ सिद्धं तु राजविशिष्टायाः गोः क्षीरेण सामर्थ्यात् ।
१६ पदविधौ समर्थवचनं वर्णाश्रये शास्त्र आनन्तर्यविज्ञानात् ।
१७ समर्थाधिकारस्य विधेयसामानाधिकरण्यान्निर्देशानर्थक्यम् ।
१८ सिद्धं तु समर्थानामिति वचनात् ।
१९ एकशेषनिर्देशाद्वा ।
२० समानाधिकरणेषूपसंख्यानमसमर्थत्वात् ।
२१ द्रव्यं पदार्थ इति चेत् ।
२२ न वा वचनप्रामाण्यात् ।
२३ लुप्ताख्यातेषु च ।
२४ तदर्थगतेर्वा ।
२५ समासो द्वयोर्द्वयोश्चेद् द्वन्द्वेऽनेकग्रहणम् ।
२६ द्वयोर्द्वयोः समास इति चेन्न बहुषु द्वित्वाभावात् ।
२७ समासान्तप्रतिषेधश्च ।
२८ अविशेषेण बहुव्रीहावनेकपदप्रसङ्गः ।
२९ तत्र स्वरसमासान्तपुंवद्भावेषु दोषः ।
३० न वावयवतत्पुरुषत्वात् ।
३१ तस्यान्तोदात्तत्वं विप्रतिषेधात् ।
३२ निमित्तिस्वरबलीयस्त्वाद्वा ।
३३ एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तिस्वरबलीयस्त्वस्य ।

---

१ प. पुस्तके इतः परमाधिकम् । अर्थानादेशनात् । तच्च लघ्वर्थम् । असंभवः खल्वप्यर्थादेशनस्य । अप्रवृत्तिः खल्वप्यर्थादेशनस्य । २ प. पुस्तके इतः परमधिकम् । समर्थतराणां वा समुदायसामर्थ्यात् । ३ प. पुस्तके इतः परमधिकम् आख्यातं स विशेषणम् । ४ प. पुस्तके °स्त्वाद्वा ।

**सुबामन्त्रिते पराङ्गवत्स्वरे ॥ २ ॥**

१ आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यामन्त्रितकारकवचनम् ।

२ तन्निमित्तग्रहणं वा ।

३ अवचने हि सुबन्तमात्रप्रसङ्गः ।

४ सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमननन्तरत्वात् ।

५ स्वरेऽवधारणाच्च ।

६ परमपि च्छन्दसि[1] ।

७ अव्ययप्रतिषेधश्च ।

८ अनव्ययीभावस्य ।

९ स्वरेऽवधारणं सुबलोपार्थम् ।

१० न वा सुबन्तैकान्तत्वात् ।

११ प्रातिपदिकैकान्तस्तु सुब्लोपे ।

**प्राक्कडारात्समासः ॥ ३ ॥**

१ प्राग्वचनं संज्ञानिवृत्त्यर्थम् ।

**सह सुपा ॥ ४ ॥**

१ सहवचनं पृथगसमासार्थम् ।

२ इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ।

**अव्ययीभावः ॥ ५ ॥**

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ ६ ॥**

**यथासादृश्ये ॥ ७ ॥**

**यावदवधारणे ॥ ८ ॥**

**सुप् प्रतिना मात्रार्थे ॥ ९ ॥**

**अक्षशलाकासंख्याः परिणा[2] ॥ १० ॥**

**विभाषापपरिबहिरञ्चवः पञ्चम्या ॥ ११ ॥ ॥ १२ ॥**

**आङ् मर्यादाभिविध्योः ॥ १३ ॥**

**लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥**

**अनुर्यत्समया ॥ १५ ॥**

**यस्य चायामः ॥ १६ ॥**

**तिष्ठद्गुप्रभृतीनि च ॥ १७ ॥**

१ तिष्ठद्गु कालविशेषे ।

२ खलेयवादीनि प्रथमान्तान्यपदार्थे ।

**पारे मध्ये षष्ठ्या वा ॥ १८ ॥**

१ पारे मध्ये षष्ठ्या वावचनम् ।

२ अवचने हि षष्ठीसमासाभावो यथैकदेशिप्रधाने ।

३ एकारान्तनिपातनं च ।

**संख्या वंश्येन ॥ १९ ॥**

**नदीभिश्च ॥ २० ॥**

१ नदीभिः संख्यासमासेऽन्यपदार्थे प्रतिषेधः[3] ।

**अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥**

**तत्पुरुषः ॥ २२ ॥**

**द्विगुश्च ॥ २३ ॥**

**द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥**

---

१ प. पुस्तके इतः परमधिकम् । पूर्वस्याङ्गवद्भवतीति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । अक्षादयस्तृतीयान्ता पूर्वोक्तस्य यथा न तद् । एकत्वेऽक्षशलाकयोः । कितवव्यवहारे च । ३ प. पुस्तके इतः परमधिकम् । नदीभिः संख्यायाः समाहारेऽव्ययीभावो वक्तव्यः ।

१ श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् ।

२ श्रितादिभिरहीने द्वितीयासमासवचनानर्थक्यं बहुव्रीहिकृतत्वात् ।

३ अहीने द्वितीयास्वरवचनानर्थक्यं च ।

४ जातिस्वरप्रसङ्गस्तु ।

५ तत्र जातादिषु वावचनात्सिद्धम् ।

**स्वयं क्तेन ॥ २५ ॥**

**खट्वा क्षेपे ॥ २६ ॥**

**सामि ॥ २७ ॥**

**कालाः ॥२८ ॥**

**अत्यन्तसंयोगे च ॥ २९ ॥**

१ अत्यन्तसंयोगे समासस्याविशेषवचनात् क्तेन समासवचनानर्थक्यम् ।

२ अनत्यन्तसंयोगार्थं तु ।

**तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥**

१ तृतीयासमासेऽर्थग्रहणमनर्थकमर्थगतिर्ह्यवचनात् ।

२ निर्देश्यमिति चेत्तृतीयार्थनिर्देशोऽपि ।

**पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१॥**

१ पूर्वादिष्ववरस्योपसंख्यानम् ।

२ सदृशग्रहण उक्तम् ।

**कर्तृकरणे कृता बहुलम् ॥ ३२ ॥**

१ कर्तृकरणे कृता क्तेन ।

**कृत्यैरधिकार्थवचने ॥ ३३ ॥**

१ कृत्यैरधिकार्थवचनेऽन्यत्रापि दृश्यते ।

२ साधनं कृतेति वा पादहारकाद्यर्थम्[३] ।

**अन्नेन व्यञ्जनम् ॥ ३४ ॥**

**भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥**

१ अन्नेन व्यञ्जनं भक्ष्येण मिश्रीकरणमित्यसमर्थसमासः ।

२ कारकाणां क्रियया सामर्थ्यात् ।

३ वचनप्रामाण्यादिति चेन्नानाकारकाणां प्रतिषेधः ।

४ सिद्धं तु समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्च ।

५ षष्ठीसमासश्च युक्तपूर्णान्तः ।

६ न वासमासेऽदर्शनात् ।

७ युक्तार्थसंप्रत्ययाच्च सामर्थ्यम् ।

८ संप्रत्ययाच्च तदर्थाध्यवसानम् ।

९ संप्रतीयमानार्थलोपे ह्यनवस्था ।

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ३६**

१ चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोऽविशेषात् ।

२ बलिरक्षिताभ्यां चानर्थकं वचनम् ।

३ विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम् ।

४ अर्थेन नित्यसमासवचनम् ।

५ सर्वलिङ्गता च ।

**पञ्चमी भयेन ॥ ३७ ॥**

**अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ।३८।**

१ प. पुस्तके नास्ति । २ कृत्यग्रहणे यण्ण्यतोर्ग्रहणमिति प. पुस्तके काशिकास्थ पाठः । ३ प. पुस्तके इतः परमधिकम् । भयभीतभीतिभीभिरिति वक्तव्यम् । भयनिर्गतजुगुप्सुभिरिति वक्तव्यम् ।

स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥३९॥

सप्तमी शौण्डैः ॥ ४० ॥

सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥

ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥

१ ध्वाङ्क्षेणेत्यर्थग्रहणम् ।

कृत्यैर्ऋणे ॥ ४३ ॥

१ कृत्यैर्नियोगे यद्ग्रहणम् ।

संज्ञायाम् ॥ ४४ ॥

क्तेनाहोरात्रावयवाः ॥ ४५ ॥

तत्र ॥ ४६ ॥

क्षेपे ॥ ४७ ॥

१ [२]क्षेपे गतिकारकपूर्व उक्तम् ।

पात्रेसमिता[३]दयश्च ॥ ४८ ॥

पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ४९ ॥

दिक्संख्ये संज्ञायाम् ॥ ५० ॥

तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥

१ द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धिः ।

२ अर्थे चेत्तद्धितानुत्पत्तिर्बहुव्रीहिवत् ।

३ समासतद्धितविधाविति चेदन्यत्र समाससंज्ञाभावः ।

४ सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् ।

५ द्विगोर्वा लुग्वचनं ज्ञापकं तद्धितोत्पत्तेः ।

६ समाहारसमूहयोरविशेषात्समाहारग्रहणानर्थक्यं तद्धितार्थेन कृतत्वात् ।

७ अभिधानार्थं तु ।

८ द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ।

९ उत्तरपदेन परिमाणिना द्विगोः समासवचनम् ।

१० अन्यत्र समुदायबहुव्रीहित्वादुत्तरपदप्रसिद्धिः ।

११ सर्वत्र मत्वर्थे प्रतिषेधः ।

संख्यापूर्वो द्विगुः ॥ ५२ ॥

कुत्सितानि कुत्सनैः ॥ ५३ ॥

पापाणके कुत्सितैः ॥ ५४ ॥

उपमानानि सामान्यवचनैः ॥ ५५ ॥

१ उपमानसमासे गुणवचनस्य विशेषभाक्त्वात्सामान्यवचनाप्रसिद्धिः ।

२ न वा श्यामत्वस्योभयत्र भावात्तद्वाचकत्वाच्च शब्दस्य सामान्यवचनप्रसिद्धिः ।

उपमितं व्याघ्रादिभिः सामान्याप्रयोगे॥

विशेषणं विशेष्येण बहुलम् ॥ ५७ ॥

१ विशेषणविशेष्ययोरुभयाविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनाप्रसिद्धिः ।

२ न वान्यतरस्य प्रधानभावात्तद्विशेषकत्वाच्चापरस्योपसर्जनप्रसिद्धिः ।

पूर्वापरप्रथमचरमजघन्यसमानमध्यममध्यमवीराश्च ॥ ५८ ॥

१ बहुलवचनस्याकृत्स्नत्वादुत्तरत्रानुक्रमणसामर्थ्यम् ।

श्रेण्यादयः कृतादिभिः ॥ ५९ ॥

१ श्रेण्यादिषु च्व्यर्थवचनम् ।

१ प पुस्तके इतः परमधिकम् । शौण्डाभिरिति वक्तव्यम् । २ प. पुस्तके नास्ति । ३ का. "संमिता" ।

**क्तेन नञ्विशिष्टेनानञ् ॥ ६० ॥**

१ नञ्विशिष्टे समानप्रकृतिवचनम् ।

२ नुडिडधिकेन च ।

३ कृतापकृतादीनां चोपसंख्यानम् ।

४ सिद्धं तु क्तेन विसमासावनञ् ।

५ गतप्रत्यागतादीनां चोपसंख्यानम् ।

**सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ६१**

**वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६२ ॥**

**कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥**

**किं क्षेपे ॥ ६४ ॥**

**पोटायुवतिस्तोककतिपयगृष्टिधेनुवशा-वेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्याप-कधूर्तैर्जातिः ॥ ६५ ॥**

**प्रशंसावचनैश्च ॥ ६६ ॥**

**युवा खलतिपलितवलिनजरतीभिः ॥ ६७ ॥**

**कृत्यतुल्याख्या अजात्या ॥ ६८ ॥**

**वर्णो वर्णेन ॥ ६९ ॥**

१ वर्णेन तृतीयासमास एतप्रतिषेधे वर्ण-ग्रहणम् ।

२ समानाधिकरणे द्विर्वर्णग्रहणम् ।

३ समानाधिकरणाधिकारे प्रधानोपस-र्जनानां परं परं विप्रतिषेधेन ।

४ समानाधिकरणसमासाद्बहुव्रीहिः ।

५ कदाचित्कर्मधारयः सर्वधनाद्यर्थः ।

६ पूर्वपदातिशय आतिशयिकाद्बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थः ।

७ उत्तरपदातिशय आतिशयिको बहुव्रीहे-र्बह्वाढ्यतराद्यर्थः ।

८ समानाधिकरणाधिकारे शाकपार्थिवा-दीनामुपसंख्यानमुत्तरपदलोपश्च[1] ।

**कुमारः श्रमणादिभिः ॥ ७० ॥**

**चतुष्पादो गर्भिण्या ॥ ७१ ॥**[2]

**मयूरव्यंसकादयश्च ॥ ७२ ॥**

॥ इति द्वितीयाध्यायस्य प्रथमः पादः ॥

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ १**

**अर्धं नपुंसकम् ॥ २ ॥**

**द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ।**

१ द्वितीयादीनां विभाषाप्रकरणे विभाषाव-चनं ज्ञापकमवयवविधाने सामान्यविधा-नाभावस्य ।

**प्राप्तापन्ने च द्वितीयया ॥ ४ ॥**

**कालाः परिमाणिना ॥ ५ ॥**

१ कालस्य येन समासस्तस्यापरिमाणित्वा-दनिर्देशः

२ सिद्धं तु कालपरिमाणं यस्य स कालस्तेन ।

३ एकवचनद्विगोश्चोपसंख्यानम् ।

४ [3]उक्तं वा ।

**नञ् ॥ ६ ॥**

१ [4]नञ्समासे भाववचन उक्तम् ।

**ईषदकृता ॥ ७ ॥**

१ ईषद्गुणवचनेन ।

**षष्ठी ॥ ८ ॥**

१ कृद्योगा च ।

२ तत्स्थैश्च गुणैः ।

३ न तु तद्विशेषणैः ।

---

१ प. पुस्तके इतः परमधिकम् । अनञिति प्रतिषेधो वक्तव्यः । २ प. पुस्तके इतः परमधिकम् । चतुष्पाज्जातिरिति वक्तव्यम् । ३–४ प. पुस्तके नास्ति ।

**याजकादिभिश्च ॥ ९ ॥**

**न निर्धारणे ॥ १० ॥**

१ प्रतिपदविधाना च ।

**पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ११ ॥**

**क्तेन च पूजायाम् ॥ १२ ॥**

**अधिकरणवाचिना च ॥ १३ ॥**

**कर्मणि च ॥ १४ ॥**

१ कर्मणीति षष्ठीनिर्देशश्चेदकर्तरि कृता समासवचनम् ।

२ तृजकाभ्यां चानर्थकः प्रतिषेधः ।

३ क्तनिर्देशेऽसमर्थत्वादप्रतिषेधः ।

४ प्रतिषेध्यमिति चेत्कर्तर्यपि प्रतिषेधः ।

५ पूजायां च प्रतिषेधानर्थक्यम् ।

६ तस्मादुभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधः ।

**तृजकाभ्यां कर्तरि ॥ १५ ॥**

**कर्तरि च ॥ १६ ॥**

**नित्यं क्रीडाजीविकयोः ॥ १७ ॥**

**कुगतिप्रादयः ॥ १८ ॥**

१ प्रादिप्रसङ्गे कर्मप्रवचनीयः प्रतिषेधः ।

२ व्यवेतप्रतिषेधश्च ।

३ सिद्धं तु क्वाङ्स्वतिदुर्गतिवचनात् ।

४ [1]प्रादयः क्ताथ ।

**उपपदमतिङ् ॥ १९ ॥**

१ उपपदमतिङिति तदर्थप्रतिषेधः ।

२ क्रियाप्रतिषेधो वा ।

३ षष्ठीसमासादुपपदसमासो विप्रतिषेधेन ।

४ न वा षष्ठीसमासस्याभावादुपपदसमासः

**अमैवाव्ययेन ॥ २० ॥**

**तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ २१ ॥**

**क्त्वा च ॥ २२ ॥**

**शेषो बहुव्रीहिः ॥ २३ ॥**

१ शेषवचनं पदतश्चेन्नाभावात् ।

२ अर्थतश्चेदविशिष्टम् ।

**अनेकमन्यपदार्थे ॥ २४ ॥**

१ [2]शेषवचन उक्तम् ।

२ अनेकवचनमुपसर्जनार्थम् ।

३ न वैकविभक्तित्वात् ।

४ पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात् ।

५ न वानभिहितत्वात् ।

६ सामान्याभिधाने हि विशेषानभिधानम् ।

७ विभक्त्यर्थाभिधानेऽद्रव्यस्य लिङ्गसंख्योपचारानुपपत्तिः ।

८ सिद्धं तु यथा गुणवचनेषु ।

९ [3]उक्तं वा ।

१० बहुव्रीहिः समानाधिकरणानाम् ।

११ अव्ययानां च ।

१२ सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च ।

---

१ प. पुस्तके इतःपरमधिकम् । स्वती पूजायाम् ( सौनाग ) । दुर्निन्दायाम् ( सौनाग ) । आङी-षदर्थे ( सौनाग ) । कुः पापार्थे ( सौनाग ) । प्रादयो गताद्यर्थे प्रथमया । अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अवादयः क्रुष्टाद्यर्थे तृतीयया । पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । निरादयः क्रान्ताद्यर्थे पञ्चम्या । अव्ययं प्रवृद्धादिभिः । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च । उदात्तवता तिङा गतिमता चाव्ययं समस्यत इति वक्तव्यम् । २-३ प. पुस्तके नास्ति ।

१३ समुदायविकारषष्ठ्याश्च ।
१४ प्रादिभ्यो धातुजस्य वा ।
१५ नञोऽस्त्यर्थानाम् ।
१६ न वानभिधानादसमानाधिकरणेषु संज्ञाभावः ।
१७ अर्थनियमे मत्वर्थग्रहणम् ।
१८ तथा चोत्तरस्य वचनार्थः ।
१९ कर्मवचनेनाप्रथमायाः ।
२० कर्तृवचनेनापि ।
२१ सुबधिकारेऽस्तिक्षीरादिवचनम् ।
२२ न वाव्ययत्वात् ।

**संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २५॥**

१ संख्यासमासे सुजन्तत्वात्संख्याप्रसिद्धिः।
२ न वासुजन्तत्वात् ।
३ सुजभावोऽभिहितार्थत्वात्समासे ।
४ अशिष्यः संख्योत्तरपदः संख्येयवाभिधायित्वात् ।
५ मत्वर्थे वा पूर्वस्य विधानात् ।
६ कबभावार्थं वा ।

**दिङ्नामान्यन्तराले ॥ २६ ॥**

**तत्र तेनदमिति सरूपे ॥ २७ ॥**

१ दिक्समाससहयोगयोश्चान्तरालप्रधानाभिधानात् ।
२ मत्वर्थे वा पूर्वस्य विधानात् ।
३ कबभावार्थं वा ।

**तेन सहेति तुल्ययोगे ॥ २८ ॥**

१ तृतीयासप्तम्यन्तेषु च क्रियाभिधानात् ।
२ न वैकशेषप्रतिषेधार्थम् ।
३ पूर्वदीर्घार्थं च ।
४ मत्वर्थे वा पूर्वस्य विधानात् ।
५ कबभावार्थं वा ।

**चार्थे द्वन्द्वः ॥ २९ ॥**

१ चार्थे द्वन्द्ववचनेऽसमासेऽपि चार्थसंप्रत्ययादनिष्टप्रसङ्गः ।
२ सिद्धं तु युगपदधिकरणवचने द्वन्द्ववचनात् ।
३ तत्र पुंवद्भावप्रतिषेधः ।
४ विप्रतिषिद्धेषु चानुपपत्तिः[3] ।
५ शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानमिति चेद्द्विवचनबहुवचनानुपपत्तिः ।
६ विग्रहे च युगपद्वचनं ज्ञापकं युगपद्वचनस्य[4] ।
७ समुदायात्सिद्धमिति चेन्नैकार्थत्वात्समुदायस्य[5] ।
८ तयोरनेकार्थत्वाद्बहुवचनप्रसङ्ग इति चेन्न बहुत्वाभावात्[6] ।
९ अन्यवाचकेनान्यस्य वचनानुपपत्तिरिति चेत्प्लक्षस्य न्यग्रोधत्वान्न्यग्रोधस्य प्लक्षत्वात् स्वशब्देनाभिधानम् ।

१ प. पुस्तके इतः परमाधिकम् । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्य दाक्षिणोत्तरपूर्वाणामित्येवमर्थम् । २ प पुस्तके °द्धे । ३ प. पुस्तके इतः परमधिकम् । शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानम् । ४ प. पुस्तके इतः परमाधिकम् । समुदायात्सिद्धम् । ५ प. पुस्तके इतः परमाधिकम् । नैकार्थ्यम् । ६ प. पुस्तके इतः परमाधिकम् । अन्यवाचकेनान्यस्य वचनानुपपत्तिः ।

१० कारणाद् द्रव्ये शब्दनिवेश इति चेत्तुल्य-कारणत्वात्सिद्धम् ।

११ दर्शनं हेतुरिति चेत्तुल्यम् ।

१२ तद्विषयं च

१३ अन्यत्रापि तद्विषयदर्शनात् ।

१४ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः ।

१५ अभिधानं पुनः स्वाभाविकम्[१] ।

१६ एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनप्रसङ्गः ।

१७ सिद्धं त्वधिकान्ता संख्या संख्याया समानाधिकरणाधिकारेऽधिकलोपश्च ।

**उपसर्जनं पूर्वम् ॥ ३० ॥**

१ उपसर्जनस्य पूर्ववचनं परप्रयोग-निवृत्त्यर्थम् ।

२ न वानिष्टादर्शनात् ।

३ षष्ठ्यन्तयोः समासेऽर्थाभेदात्प्रधानस्यापूर्वनिपातः ।

**राजदन्तादिषु परम् ॥ ३१ ॥**

**द्वन्द्वे घि ॥ ३२ ॥**

**अजाद्यदन्तम् ॥ ३३ ॥**

**अल्पाच्तरम् ॥ ३४ ॥**

१ अतन्त्रे तरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन समासः ।

२ अनेकप्राप्तावेकस्य नियमोऽनियमः शेषेषु

३ ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणाम् ।

४ अभ्यर्हितम् ।

५ लघ्वक्षरम्[२] ।

६ वर्णानामानुपूर्व्येण ।

७ भ्रातुश्च ज्यायसः ।

८ संख्याया अल्पीयसः[३] ।

९ धर्मादिषूभयम् ।

**सप्तमीविशेषणे बहुव्रीहौ ॥ ३५ ॥**

१ बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम् ।

२ वा प्रियस्य ।

३ सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम् ।

**निष्ठा ॥ ३६ ॥**

१ निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् ।

२ न वोत्तरपदस्यान्तोदात्तवचनं ज्ञापकं परभावस्य ।

३ प्रतिषेधे तु पूर्वनिपातप्रसङ्गस्तस्माद्राजदन्तादिषु पाठः ।

४ प्रहरणार्थेभ्यश्च ।

५ द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन ।

६ उभाभ्यामल्पाच्तरम् ।

**वाहिताग्न्यादिषु ॥ ३७ ॥**

**कडाराः कर्मधारये ॥ ३८ ॥**[४]

॥ इति द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

१ प. पुस्तके इतः परमधिकम् । एकादीनां दशादिभिर्द्वन्द्वः । २ प. पुस्तके इतः परमधिकम् । सर्वत एवाभ्यर्हितं पूर्वं निपततीति वाच्यम् । ३ प. पुस्तके । ०स्याः । ४ प. पुस्तके इतः परमधिकम् । कडारादय इति वक्तव्यम् ।

**अनभिहिते ॥ १ ॥**

१ अनभिहितवचनमनर्थकमन्यत्रापि विहितस्याभावादभिहिते ।

२ श्वम्बहुजकक्षु नानादेशत्वादुत्सर्गाप्रतिषेधः ।

३ अनाभिहितस्तु विभक्त्यर्थस्तस्मादनभिहितवचनम् ।

४ अभिहिते प्रथमाभावः ।

५ तिङ्कृत्तद्धितसमासैः परिसंख्यानम् ।

६ उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिवचनम् ।

७ द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्त्यभावप्रसङ्गः ।

८ न वान्यतरेणानामिधानात् ।

९ अनभिहिते हि विधानम् ।

१० अनभिहितवचनमनर्थकं प्रथमाविधानस्यानवकाशत्वात् ।

११ अवकाशोऽकारकमिति चेन्नास्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति ।

१२ विप्रतिषेधाद्वा प्रथमाभावः ।

१३ कृत्प्रयोगे तु परं विधानं षष्ठ्यास्तत्प्रतिषेधार्थम् ।

**कर्मणि द्वितीया ॥ २ ॥**

१ समयानिकषाहायोगेषूपसंख्यानम् ।

**तृतीया च होश्छन्दसि ॥ ३ ॥**

**अन्तरान्तरेणयुक्ते ॥ ४ ॥**

१ अन्तरान्तरेणयुक्तानामप्रधानवचनम् ।

**कालाध्वनोरत्यन्तसंयोगे ॥ ५ ॥**

१ अत्यन्तसंयोगे कर्मवद्भावार्थम् ।

**अपवर्गे तृतीया[1] ॥ ६ ॥**

**सप्तमीपञ्चम्यौ कारकमध्ये[2] ॥ ७ ॥**

**कर्मप्रवचनीययुक्ते द्वितीया ॥ ८ ॥**

१ कर्मप्रवचनीययुक्ते प्रत्यादिभिश्च लक्षणादिषूपसंख्यानं सप्तमीपञ्चम्योः प्रतिषेधार्थम् ।

२ [3]उक्तं वा ।

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९ ॥**

१ यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चेदवचनात्सिद्धम् ।

२ प्रथमानुपपत्तिस्तु ।

३ स्ववचनात्सिद्धम् ।

**पञ्चम्यपाङ्परिभिः ॥ १० ॥**

**प्रतिनिधिप्रतिदाने च यस्मात् ॥ ११ ॥**

**गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १२ ॥**

१ अध्वन्यर्थग्रहणम् ।

२ आस्थितप्रतिषेधश्च ।

३ चेष्टायामनध्वनि स्त्रियं गच्छत्यजां नयतीत्यतिप्रसङ्गः ।

४ सिद्धं त्वसंप्राप्तवचनात् ।

५ अध्वनश्चानपवादः ।

---

[1] प. पुस्तके इतः परमधिकम् । उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते । [2] प. पुस्तके इतः परमधिकम् । क्रियापवर्ग इति वक्तव्यम् । [3] प. पुस्तके इतः परमधिकम् । क्रियामध्य इति वक्तव्यम् । [4] प. पुस्तके नास्ति ।

**चतुर्थी संप्रदाने ॥ १३ ॥**

१ चतुर्थीविधाने तादर्थ्य उपसंख्यानम् ।

२ क्लृपि संपद्यमाने ।

३ उत्पातेन ज्ञाप्यमाने ।

४ हितयोगे च ।

**क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥**

**तुमर्थाच्च भाववचनात् ॥ १५ ॥**

**नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥**

१ स्वस्तियोगे चतुर्थी कुशलार्थैराशिषि वाविधानात् ।

२ अलमिति पर्याप्त्यर्थग्रहणम् ।

**मन्यकर्मण्यनादरे विभाषाप्राणिषु॥१७॥**

१ मन्यकर्मणि प्रकृष्टकुत्सितग्रहणम् ।

**कर्तृकरणयोस्तृतीया ॥ १८ ॥**

१ तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम् ।

**सहयुक्तेऽप्रधाने ॥ १९ ॥**

१ सहयुक्तेऽप्रधानवचनमनर्थकमुपपदविभक्तेः कारकविभक्तिर्बलीयस्त्वादन्यत्रापि ।

**येनाङ्गविकारः ॥ २० ॥**

१ अङ्गाद्विकृतात्तद्विकारतश्चेदङ्गिनो वचनम् ।

**इत्थंभूतलक्षणे ॥ २१ ॥**

१ इत्थंभूतलक्षणे तत्स्थे प्रतिषेधः ।

२ न वेत्थंभूतस्य लक्षणेनापृथग्भावात् ।

**संज्ञो ऽन्यतरस्यां कर्मणि ॥ २२ ॥**

१ संज्ञः कृत्प्रयोगे षष्ठी विप्रतिषेधेन ।

२ उपपदविभक्तेश्चोपपदविभक्तिः ।

**हेतौ[3] ॥ २३ ॥**

**अकर्तर्यृणे पञ्चमी ॥ २४ ॥**

**विभाषा गुणे ऽस्त्रियाम् ॥ २५ ॥**

**षष्ठी हेतुप्रयोगे ॥ २६ ॥**

**सर्वनाम्नस्तृतीया च ॥ २७ ॥**

**अपादाने पञ्चमी ॥ २८ ॥**

१ पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् ।

२ अधिकरणे च ।

३ प्रश्नाख्यानयोश्च ।

४ यतश्चाध्वकालनिर्माणम् ।

५ तद्युक्तात्काले सप्तमी ।

६ अध्वनः प्रथमा च ।

**अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते ॥ २९ ॥**

**षष्ठ्यतसर्थप्रत्ययेन ॥ ३० ॥**

**एनपा द्वितीया ॥ ३१ ॥**

**पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ।**

१ पृथगादिषु पञ्चमीविधानम् ।

२ अनधिकारात् ।

३ अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधः ।

**करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ ३३ ॥**

**दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥३४॥**

---

१ प. पुस्तके इतः परमधिकम् । यदेतदप्राणिष्वित्येतदनावादिष्विति वक्ष्यामि । २ प्रतिकृष्येति कैयटः ।

३ प. पुस्तके इतः परमधिकम् । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनं प्रायोदर्शनं वा ।

**दूरान्तिकार्थेभ्यो द्वितीया च ॥ ३५ ॥**

१ दूरान्तिकार्थेभ्यः पञ्चमीविधाने तद्युक्तात्पञ्चमीप्रतिषेधः ।

२ न वा तत्रापि दर्शनादप्रतिषेधः ।

**सप्तम्यधिकरणे च ॥ ३६ ॥**

१ सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ।

२ साध्वसाधुप्रयोगे च ।

३ कारकार्हाणां च कारकत्वे ।

४ अकारकार्हाणां चाकारत्वे ।

५ तद्विपर्यासे च ।

६ निमित्तात्कर्मसंयोगे[1] ।

**यस्य च भावेन भावलक्षणम् ॥ ३७ ॥**

१ भावलक्षणे सप्तमीविधानेऽभावलक्षण उपसंख्यानम् ।

२ सिद्धं तु भावप्रवृत्तौ यस्य भावारम्भवचनात् ।

**षष्ठी चानादरे ॥ ३८ ॥**

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ३९ ॥**

**आयुक्तकुशलाभ्यां चासेवायाम् ॥ ४० ॥**

**यतश्च निर्धारणम् ॥ ४१ ॥**

**पञ्चमी विभक्ते ॥ ४२ ॥**

**साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः[2] ॥**

**प्रसितोत्सुकाभ्यां तृतीया च ॥ ४४ ॥**

**नक्षत्रे च लुपि ॥ ४५ ॥**

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ ४६ ॥**

१ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमालक्षणे पदसामानाधिकरण्य उपसंख्यानमधिकत्वात् ।

२ न वा वाक्यार्थत्वात् ।

३ अभिहितलक्षणायामनभिहिते प्रथमाविधिः ।

४ [3]उक्तं वा ।

५ अभिहितानभिहिते प्रथमाभावः ।

६ तिङ्समानाधिकरण इति चेत्तिङोऽप्रयोगे प्रथमाविधिः ।

७ [4]उक्तं पूर्वेण ।

८ शतृशानचोश्च निमित्तभावात्तिङोऽभावस्तयोरपवादत्वात् ।

**संबोधने च ॥ ४७ ॥**

**सामन्त्रितम् ॥ ४८ ॥**

**एकवचनं संबुद्धिः ॥ ४९ ॥**

**षष्ठी शेषे ॥ ५० ॥**

१ प्रत्ययावधारणाच्छेषवचनम् ।

२ अर्थावधारणाद्वा ।

३ षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधः ।

४ तत्र प्रथमाविधिः ।

५ [5]उक्तं पूर्वेण ।

**ज्ञो ऽविदर्थस्य करणे ॥ ५१ ॥**

**अधीगर्थदयेशां कर्मणि ॥ ५२ ॥**

१ कर्मादिष्वकर्मकवद्वचनम् ।

---

१ प. पुस्तके कर्मयोगे । २ प. पुस्तके इतः परमधिकम् । अप्रत्यादिभिरिति ( पा. सू. १. ४. ९० ) वक्तव्यम् । ३-५ प. पुस्तके नास्ति ।

२ कर्माभिधाने हि[1] लिङ्गवचनानुपपत्तिः ।

३ षष्ठीप्रसङ्गश्च ।

**कृञः प्रतियत्ने ॥ ५३ ॥**

**रुजार्थानां भाववचनानामज्वरेः[2] ॥५४॥**

**आशिषि नाथः ॥ ५५ ॥**

**जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ ५६ ॥**

**व्यवहृपणोः समर्थयोः ॥ ५७ ॥**

**दिवस्तदर्थस्य ॥ ५८ ॥**

**विभाषोपसर्गे ॥ ५९ ॥**

**द्वितीया ब्राह्मणे ॥ ६० ॥**

**प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥ ६१ ॥**

१ हविषोऽप्रस्थितस्य ।

**चतुर्थ्यर्थे बहुलं छन्दसि ॥ ६२ ॥**

१ षष्ठ्यर्थे चतुर्थीवचनम् ।

**यजेश्च करणे ॥ ६३ ॥**

**कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ॥६४॥**

**कर्तृकर्मणोः कृति ॥ ६५ ॥**

१ कर्तृकर्मणोः षष्ठीविधाने कृद्ग्रहणानर्थक्यं लप्रतिषेधात् ।

२ तस्य कर्मकर्त्रर्थमिति चेत्प्रतिषेधेऽपि तदन्तकर्मकर्तृत्वात्सिद्धम् ।

**उभयप्राप्तौ कर्मणि ॥ ६६ ॥**

१ उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः[3] ।

**क्तस्य च वर्तमाने ॥ ६७ ॥**

१ क्तस्य च वर्तमाने नपुंसके भाव उपसंख्यानम् ।

२ शेषविज्ञानात्सिद्धम् ।

**अधिकरणवाचिनश्च ॥ ६८ ॥**

**न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥६९॥**

१ लादेशे सल्लिङ्ग्रहणं किकिनोः प्रतिषेधार्थम् ।

२ तयोरलादेशत्वात् ।

३ उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः[4] ।

४ अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः ।

५ शानंश्चानश्शतृणामुपसंख्यानम् ।

६ द्विषः शतुर्वावचनम् ।

**अकेनोर्भविष्यदाधमर्ण्ययोः ॥ ७० ॥**

१ अकस्य भविष्यति ।

२ इन आधमर्ण्ये च ।

**कृत्यानां कर्तरि वा ॥ ७१ ॥**

१ भव्यादीनां कर्मणोऽनभिधानात्कृत्यानां कर्तृग्रहणम् ।

**तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ॥ ७२ ॥**

**चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ ७३ ॥**

॥ इति द्वितीयाध्यायस्य तृतीयः पादः ॥

---

१ प. पुस्तके अत्र 'हि' नास्ति । २ प. पुस्तके इतः परमधिकम् । अज्वरिसताप्योरिति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यम् । शेषे विभाषा । ४ प. पुस्तके इतः परमधिकम् । उकारप्रयोगे नेति वक्तव्यम् ।

**द्विगुरेकवचनम् ॥ १ ॥**

१ प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च द्विगोरेकवचनविधानम् ।

२ तत्रानुप्रयोगस्यैकवचनाभावोऽद्विगुत्वात् ।

३ सिद्धं तु द्विग्वर्थस्यैकवद्वचनात् ।

४ एकशेषप्रतिषेधश्च ।

५ न वान्यस्यानेकत्वात् ।

६ समाहारग्रहणं च तद्धितार्थप्रतिषेधार्थम् ।

७ न वा समाहारैकत्वात् ।

**द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २ ॥**

१ प्राणितूर्यसेनाङ्गानां तत्पूर्वपदोत्तरपदग्रहणम् ।

२ योगविभागात्सिद्धम् ।

**अनुवादे चरणानाम् ॥ ३ ॥**

१ स्थेणोः ।

२ अद्यतन्यां च ।

**अध्वर्युक्रतुरनपुंसकम् ॥ ४ ॥**

**अध्ययनतोऽविप्रकृष्टाख्यानाम् ॥ ५ ॥**

**जातिरप्राणिनाम् ॥ ६ ॥**

**विशिष्टलिङ्गो नदी देशोऽग्रामाः ॥ ७ ॥**

१ ग्रामप्रतिषेधे नगरप्रतिषेधः ।

२ उभयतश्च ग्रामाणाम् ।

**क्षुद्रजन्तवः ॥ ८ ॥**

**येषां च विरोधः शाश्वतिकः ॥ ९ ॥**

**शूद्राणामनिरवसितानाम् ॥ १० ॥**

**गवाश्वप्रभृतीनि च ॥ ११ ॥**

१ गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम् ।

**विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥ १२ ॥**

१ बहुप्रकृतिः फलसेनावनस्पतिमृगशकुन्तक्षुद्रजन्तुधान्यतृणानाम् ।

२ पशुशकुनिद्वन्द्वे विरोधिनां पूर्वविप्रतिषिद्धम् ।

३ अश्ववडवयोः पूर्वलिङ्गत्वात्पशुद्वन्द्वनपुंसकम् ।

४ प्रतिपदविधानात्सिद्धम् ।

५ एकवचनमनर्थकं समाहारैकत्वात् ।

**विप्रतिषिद्धं चानधिकरणवाचि ॥ १३ ॥**

**न दधिपयआदीनि ॥ १४ ॥**

**अधिकरणैतावत्त्वे च ॥ १५ ॥**

**विभाषा समीपे ॥ १६ ॥**

**स नपुंसकम् ॥ १७ ॥**

**अव्ययीभावश्च ॥ १८ ॥**

**तत्पुरुषोऽनञ्कर्मधारयः ॥ १९ ॥**

**संज्ञायां कन्थोशीनरेषु ॥ २० ॥**

**उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ॥ २१ ॥**

**छाया बाहुल्ये ॥ २२ ॥**

**सभा राजामनुष्यपूर्वा ॥ २३ ॥**

**अशाला च ॥ २४ ॥**

**विभाषा सेनासुराछायाशालानिशानाम् ॥ २५ ॥**

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २६ ॥**

१ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति चेत्प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः ।

२ पूर्वपदस्य च ।

३ समासादन्यल्लिङ्गमिति चदेश्ववडवयोष्टोब्लुग्वचनम् ।

४ निपातनात्सिद्धम् ।
५ उपसर्जनह्रस्वत्वं वा ।
६ परवल्लिङ्गमिति शब्दशब्दार्थौ ।
७ प्राप्तादिषु चैकदेशिग्रहणात्सिद्धम् ।

**पूर्ववदश्ववडवौ ॥ २७ ॥**

**हेमन्तशिशिरावहोरात्रे च च्छन्दसि २८**

**रात्राह्नाहाः पुंसि ॥ २९ ॥**

१ अनुवाकादयः पुंसि ।

**अपथं नपुंसकम् ॥ ३० ॥**

१ पथः संख्याव्ययादेः ।
२ द्विगुश्च[1] ।
३ वावन्तः ।

**अर्धर्चाः पुंसि च[2] ॥ ३१ ॥**

**इदमो ऽन्वादेशे ऽशनुदात्तस्तृतीयादौ ॥ ३२ ॥**

१ अन्वादेशे समानाधिकरणग्रहणं देवदत्तं भोजयेमं चेत्यप्रसङ्गार्थम् ।
२ अन्वादेशश्च कथितानुकथनमात्रम् ।
३ आदेशवचनं साकच्कार्थम् ।
४ शित्करणं सर्वादेशार्थम् ।
५ न वान्त्यस्य विकारवचनानर्थक्यात् ।
६ अर्थवत्त्वादेशप्रतिषेधार्थम् ।
७ तस्माच्छित्करणम् ।

**एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥३३॥**

**द्वितीयाटौस्स्वेनः ॥ ३४ ॥**

१ एनदिति नपुंसकैकवचने ।

**आर्धधातुके ॥ ३५ ॥**

१ जग्ध्यादिष्वार्धधातुकाश्रयत्वात्सति तस्मिन्विधानम् ।
२ तत्रोत्सर्गलक्षणप्रतिषेधः[5] ।
३ सामान्याश्रयत्वाद्विशेषस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यद्विधिप्रसङ्गः ।
४ पौर्वापर्याभावाच्च सामान्येनानुपपत्तिः ।
५ सिद्धं तु सार्वधातुके प्रतिषेधात् ।

**अदो जग्धिर्ल्यप्ति किति ॥ ३६ ॥**

**लुङ्सनोर्घस्लृ ॥ ३७ ॥**

१ घस्लभावेऽच्युपसंख्यानम् ।

**घञपोश्च ॥ ३८ ॥**

**बहुलं छन्दसि ॥ ३९ ॥**

**लिट्यन्यतरस्याम् ॥ ४० ॥**

**वेञो वयिः ॥ ४१ ॥**

**हनो वध लिङि ॥ ४२ ॥**

**लुङि च ॥ ४३ ॥**

१ वधौ व्यञ्जनान्त उक्तम्[6] ।

**आत्मनेपदेष्वन्यतरस्याम् ॥ ४४ ॥**

**इणो गा लुङि ॥ ४५ ॥**

१ इण्वदिकः ।

**णौ गमिरबोधने ॥ ४६ ॥**

**सनि च ॥ ४७ ॥**

**इङश्च ॥ ४८ ॥**

**गाङ् लिटि ॥ ४९ ॥**

१ गाङ्यनुबन्धकरणं विशेषणार्थम् ।

---

१ प. पुस्तके इतः परमधिकम् । पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । पात्रादिभ्यः प्रतिषेधो वक्तव्यः । ४ प. पुस्तके इतः परमधिकम् । अर्धर्चादय इति वक्तव्यम् । ५ प. पुस्तके इतः परमधिकम् । सामान्याश्रयत्वाद्विशेषस्यानाश्रयः । ६ प. पुस्तके नास्ति

२ ज्ञापकं वा सानुबन्धकस्यादेशवचन इत्कार्याभावस्य ।

३ प्रयोजनं चक्षिङः ख्याञ् ।

४ लटः शतृशानचौ ।

५ युवोरनाकौ ।

६ मेश्चाननुबन्धकस्याम्वचनम् ।

**विभाषा लुङ्लृङोः ॥ ५० ॥**

**णौ च संश्चङोः ॥ ५१ ॥**

**अस्तेर्भूः ॥ ५२ ॥**

**ब्रुवो वचिः ॥ ५३ ॥**

**चक्षिङः ख्याञ् ॥ ५४ ॥**

१ चक्षिङः क्शाञ्ख्याञौ ।

२ खशादिर्वा ।

३ असिद्धे शस्य यवचनं विभाषा ।

४ प्रयोजनं सौप्रख्ये वुञ्विधिः ।

५ निष्ठांनत्वमाख्याते ।

६ रुविधिः पुंख्याने ।

७ णत्वं पर्याख्याने ।

८ सस्थानत्वं नमःख्यात्रे ।

९ वर्जने प्रतिषेधः ।

१० असनयोश्च ।

११ बहुलं तणि ।

१२ अन्नवधकगात्रविचक्षणाजिराद्यर्थम् ।

**वा लिटि ॥ ५५ ॥**

**अजेर्व्यघञपोः ॥ ५६ ॥**

१ घञपोः प्रतिषेधे क्यप उपसंख्यानम्[1] ।

**वा यौ ॥ ५७ ॥**

**ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥५८॥**

१ आणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानम्[2] ।

**पैलादिभ्यश्च ॥ ५९ ॥**

**इञः प्राचाम् ॥ ६० ॥**

**न तौल्वलिभ्यः ॥ ६१ ॥**

**तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ ६२ ॥**

१ तद्राजादीनां लुकि समासबहुत्वे प्रतिषेधः ।

२ अबहुत्वे च लुग्वचनम् ।

३ द्वन्द्वेऽबहुषु लुग्वचनम् ।

४ सिद्धं तु प्रत्ययार्थबहुत्वे लुग्वचनात् ।

५ द्वन्द्वेऽबहुषु लुग्वचनम् ।

६ गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ।

७ एकवचनाद्विवचनान्तस्य प्रवृत्तो बहुषु लोपो यूनि ।

८ न वा सर्वेषां द्वन्द्वे बह्वर्थत्वात् ।

**यस्कादिभ्यो गोत्रे ॥ ६३ ॥**

**यञञोश्च ॥ ६४ ॥**

१ यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् ।

**अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ॥**

**बह्वच इञः प्राच्यभरतेषु ॥ ६६ ॥**

**न गोपवनादिभ्यः ॥ ६७ ॥**

१ गोपवनादिप्रतिषेधः प्राग्घरितादिभ्यः ।

---

१ प. पुस्तके काशिकास्थः पाठः । वलादावार्धधातुके । २ प. पुस्तके इतः परमधिकम् । आणिञोर्लुकि क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् । अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् ।

**तिककितवादिभ्यो द्वन्द्वे ॥ ६८ ॥**

**उपकादिभ्यो ऽन्यतरस्यामद्वन्द्वे ॥६९॥**

१ अद्वन्द्व इति द्वन्द्वाधिकारनिवृत्त्यर्थम् ।

**आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ ७० ॥**

१ आगस्त्यकौण्डिन्ययोः प्रकृतिनिपातनम् ।

२ लुक्प्रतिषेधे वृद्ध्यर्थम् ।

३ प्रत्ययान्तनिपातने हि वृद्ध्यभावः ।

४ अधिकारात्प्रत्ययलोपः ।

**सुपो धातुप्रातिपदिकयोः ॥ ७१ ॥**

**अदिप्रभृतिभ्यः शपः ॥ ७२ ॥**

**बहुलं छन्दसि ॥ ७३ ॥**

**यङो ऽचि च ॥ ७४ ॥**

१ ऊतोऽचि ।

**जुहोत्यादिभ्यः श्लुः ॥ ७५ ॥**

**बहुलं छन्दसि ॥ ७६ ॥**

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ ७७ ॥**

१ गापोर्ग्रहण इण्पिबत्योर्ग्रहणम् ।

**विभाषा घ्राधेट्शाच्छासः ॥ ७८ ॥**

**तनादिभ्यस्तथासोः ॥ ७९ ॥**

१ तथासोरात्मनेपदवचनम् ।

२ एकवचनग्रहणं वा ।

३ अवचने ह्यनिष्टप्रसङ्गः ।

**मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥ ८० ॥**

**आमः ॥ ८१ ॥**

१ आमो लेर्लोपे लुङ्लोटोरुपसंख्यानम् ।[1]

२ आमन्तेभ्यो णलः प्रतिषेधः ।[2]

३ आमन्तेभ्योऽर्थवद्ग्रहणाण्णलोऽप्रतिषेध इति चेदमः प्रतिषेधः ।[3]

४ उक्तं वा ।

५ लुगादेशापवादः ।

६ तिङ्कृताभावस्तु ।

७ सुबन्तपदत्वात्सिद्धम् ।

८ लकारस्य कृत्त्वात्प्रातिपदिकत्वं तदाश्रयं प्रत्ययाविधानम् ।

९ अव्ययत्वं मकारान्तत्वात् ।

१० स्वरः कृदन्तप्रकृतिस्वरत्वात् ।

११ तथा च निघातानिघातसिद्धिः ।

१२ नञा तु समासप्रसङ्गः ।

१३ उक्तं वा ।

**अव्ययादाप्सुपः ॥ ८२ ॥**

१ अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात् ।

**नाव्ययीभावादतो ऽम् त्वपञ्चम्याः ॥८३॥**

१ नाव्ययीभावादत इति योगव्यवसानम् ।

२ पञ्चम्या अम्प्रतिषेधार्थम् ।

३ एकयोगे ह्युभयोः प्रतिषेधः[4] ।

४ अमि पञ्चमीप्रतिषेधेऽपादानग्रहणम् ।

५ कर्मप्रवचनीययुक्तेऽप्रतिषेधार्थम् ।

६ न वोत्तरपदस्य कर्मप्रवनीययोगात्समासात्पञ्चम्यभावः ।

**तृतीयासप्तम्योर्बहुलम् ॥ ८४ ॥**

१ प. इतः परमधिकम् । आमन्तेभ्योऽर्थवद्ग्रहणाण्णलोऽप्रतिषेधः । २–३ प. पुस्तके नास्ति । ४ प. पुस्तके इतः परमधिकम् । तुर्नियामकः ।

१ सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यम् ।

**लुटः प्रथमस्य डारौरसः ॥ ८५ ॥**

१ टितां टेरेविधेर्लुटो डारौरसः पूर्वविप्रतिषिद्धम् ।

२ आत्मनेपदानां चेति वचनात्सिद्धम् ।

३ तच्च समसंख्यार्थम् ।

४ डाविकारस्य शित्करणं सर्वादेशार्थम् ।

५ निघातप्रसङ्गस्तु ।

६ सिद्धमलोऽन्त्यविकारात् ।

७ डिति टेर्लोपाल्लोपः ।

८ अनित्त्वाद्वा ।

९ प्रश्लिष्टनिर्देशाद्वा ।

१० तिङ्ग्रहणमेकदेशविकृतस्यानन्यत्वात् ।

११ स्वरे विप्रतिषेधात्सिद्धम् ।

॥ इति द्वितीयाध्यायस्य चतुर्थः पादः ॥

---

**प्रत्ययः ॥ १ ॥**

१ प्रत्ययाधिकारे प्रकृत्युपपदोपाधीनामप्रतिषेधः ।

२ निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापि ।

३ प्रधाने कार्यसंप्रत्ययाद्वा सिद्धम् ।

४ विकारागमेषु च परविज्ञानात् ।

५ षष्ठीनिर्दिष्टस्य च तद्युक्तत्वात् ।

६ प्रत्ययविधानानुपपत्तिस्तु ।

७ तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम् ।

८ अर्थाश्रयत्वाद्वा ।

**परश्च ॥ २ ॥**

१ परवचनमनर्थकं पञ्चमीनिर्दिष्टाद्धि परत्वात्।

२ विकारागमेषु चोक्तम्[1] ।

३ अत्यन्तापरदृष्टानां वा परभूतलोपार्थम् ।

४ प्रयोगनियमार्थं वा ।

५ प्रकृतेरर्थाभिधाने प्रत्ययादर्शनात् ।

६ द्व्यसजादीनां च केवलदृष्टत्वात् ।

७ वावचने चानुत्पत्त्यर्थम् ।

८ वावचने[2] चोक्तम् ।

९ तत्र प्रत्ययनियमे प्रकृतिनियमाभावः ।

१० प्रकृतिनियमे प्रत्ययानियमः ।

११ सिद्धं तूभयनियमात् ।

**आद्युदात्तश्च ॥ ३ ॥**

१ आद्युदात्तत्वस्य प्रत्ययसंज्ञासंनियोगे प्रयोजनं यस्य संज्ञाकरणं तस्याद्युदात्तार्थम् ।

२ असंनियोगे हि यस्मात्स तदादेराद्युदात्त्वं तदन्तस्य चानुदात्तत्वम् ।

३ न वा प्रकृतेराद्युदात्तवचनं ज्ञापकं तदादेरग्रहणस्य ।

४ प्रकृतिस्वरस्य च[3] विधानसामर्थ्यात्प्रत्ययस्वराभावः ।

५ आगमानुदात्तार्थं वा ।

६ न वागमस्यानुदात्तवचनात् ।

७ अवचने हि सीयुडादेराद्युदात्तत्वम् ।

८ आद्युदात्तस्य वा लोपार्थम् ।

९ न वा बहिरङ्गलक्षणत्वात् ।

१० अवचने हि जिनिकित्स्वतिप्रसङ्गः ।

११ प्रत्ययाद्युदात्तत्वाद्धातोरन्तः ।

१२ पित्स्वरात्तित्स्वरष्टापि ।

---

१-२ प. पुस्तके नास्ति । ३ प. पुस्तके 'च' नास्ति ।

१३ चित्स्वरश्चापि पित्स्वरात् ।

१४ न वाद्युदात्तस्य प्रत्ययसंज्ञासंनियोगात् ।

१५ टापि स्वरितेनैकादेशः ।

१६ चापि चित्करणात् ।

**अनुदात्तौ सुप्पितौ ॥ ४ ॥**

**गुप्तिज्किद्भ्यः सन् ॥ ५ ॥**[1]

१ गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् ।

**मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ६ ॥**

१ अभ्यासदीर्घत्वेऽवर्णस्य दीर्घप्रसङ्गः ।

२ न वाभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात्[2] ।

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ७ ॥**

१ कर्मग्रहणात्सन्निधौ धातुग्रहणानर्थक्यम् ।

२ सोपसर्गे कर्मेति चेत्कर्मविशेषकत्वादुपसर्गस्यानुपसर्गे कर्म ।

३ सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मकत्वात् ।

४ सुबन्ताच्चाप्रसङ्गः क्यजादीनामपवादत्वात् ।

५ अनभिधानाद्वा ।

६ कर्मसमानकर्तृकग्रहणानर्थक्यं चेच्छाभिधाने प्रत्ययविधानात् ।

७ अकर्मणो ह्यसमानकर्तृकाद्वानभिधानम् ।

८ अङ्गपरिमाणार्थं तु ।

९ वावचनानर्थक्यं च तत्र नित्यत्वात्सनः ।

१० तुमुनन्ताद्वा तस्य च लुग्वचनम् ।

११ लिङुत्तमाद्वा[3] ।

१२ आशङ्कायामचेतनेषूपसंख्यानम् ।

१३ न वा तुल्यकारणात्वादिच्छाया हि प्रवृत्तित उपलब्धिः ।

१४ उपमानाद्वा सिद्धम् ।

१६ सर्वस्य वा चेतनावत्त्वात् ।

**सुप आत्मनः क्यच्[4] ॥ ८ ॥**

१ क्यचि मान्ताव्ययप्रतिषेधः ।

२ गोसमानाक्षरनान्तादित्येके ।

**काम्यच्च ॥ ९ ॥**

१ काम्यचश्चित्करणानर्थक्यं कस्येदर्थाभावात् ।

**उपमानादाचारे ॥ १० ॥**

१ अधिकरणाच्च ।

**कर्तुः क्यङ् सलोपश्च ॥ ११ ॥**

१ सलोपो वा ।

२ ओजोऽप्सरसोर्नित्यम्[5] ।

३ आचारे गल्भक्लीबहोडेभ्यः क्विब्वा[6] ।

---

१ प. पुस्तके इतः परमधिकम् । गुपानिन्दायाम् का. । तिजः क्षमायाम् का. । कितेर्व्याधिप्रतिकारे का. । २ प. पुस्तके इतः परमधिकम् । मानेर्जिज्ञासायाम् का. । वधेर्वैरूप्ये का. । दानेरार्जवे का. । शानेर्निशाने का. । ३ प. पुस्तके नास्ति । ४ प. पुस्तके इतः परमधिकम् । छन्दस्यघशब्दात्परेच्छायां क्यज् । समानाधिकरणानां सर्वत्रावृत्तिरयोगादेकेन । द्वितीयात्नुपपत्तिस्तु । ५ प. पुस्तके इतः परमधिकम् । सलोपोऽप्सरस एव । ६ प. पुस्तके इतः परमधिकम् । सर्वप्रातिपदिकेभ्य आचारे क्विब्वक्तव्योऽश्वति गर्दभतीत्येवमर्थम् ।

**भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥१२॥**

१ भृशादिष्वभूततद्भावग्रहणम् ।

२ च्विप्रतिषेधानर्थक्यं च भवत्यर्थे क्यङ्वचनात् ।

३ भवतियोगे च्विविधानम् ।

४ डाचि वचनप्रामाण्यात् ।

५ भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति-चेत्स्वरे दोषः ।

६ सोपसर्गादिति चेदटि दोषः[1] ।

**लोहितादिडाज्भ्यः क्यष् ॥ १३ ॥**

१ लोहितडाज्भ्यः क्यष्वचनम् ।

२ भृशादिष्वितराणि ।

**कष्टाय क्रमणे ॥ १४ ॥**

१ सत्रकक्षकष्टगहनेभ्यः कण्वचिकीर्षायाम् ।

**कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ।१५**

१ तपसः परस्मैपदं च ।

**बाष्पोष्मभ्यामुद्वमने[3] ॥ १६ ॥**

**शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे[4] ॥ १७ ॥**

१ सुदिनदुर्दिनाभ्यां च ।

२ नीराहाच ।

**सुखादिभ्यः कर्तृवेदनायाम् ॥ १८ ॥**

**नमोवरिवश्चित्रङः क्यच् ॥ १९ ॥**

१ नमसः क्यचि द्वितीयानुपपत्तिः ।

२ प्रकृत्यन्तरत्वात्सिद्धम् ।

३ क्यजादिषु प्रत्ययार्थनिर्देशः[5] ।

**पुच्छभाण्डचीवराण्णिङ् ॥ २० ॥**

**मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ २१ ॥**

१ हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्[6] ।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ २२ ॥**

१ यङ्विधौ धातुग्रहणे उक्तम् ।

२ एकाज्झलादिग्रहणे च ।

३ ऊर्णोतेश्चोपसंख्यानम्[7] ।

४ क्रियासमभिहारे यङो विप्रतिषेधेन लोड्विधानम् ।

५ न वा नानार्थत्वात्कर्तृकर्मणोर्हि लविधानं क्रियाविशेषे स्वार्थे यङ् ।

६ उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यम् ।

७ क्रियासमभिहारे च नैतेभ्यः ।

**नित्यं कौटिल्ये गतौ ॥ २३ ॥**

**लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ॥ २४ ॥**

---

१ प. पुस्तके 'अडल्यद्विर्वचनेषु' इत्यधिकम् । २ प. पुस्तके इतः परमाधिकम् । हनु चलने इति वक्तव्यम् । ३ प. पुस्तके इतः परमाधिकम् । फेनाच्चेति वक्तव्यम् । ४ प. पुस्तके इतः परमाधिकम् । अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणम् । ५ प. पुस्तके इतः परमाधिकम् । नमसः पूजायाम् भा. । वरिवसः परिचर्यायाम् भा. । चित्रङ आश्चर्ये । भाण्डात्समाचयने भा. । चीवरादर्जने परिधाने वा भा. । पुच्छादुदसने व्यसने पर्यसने च भा. । ६ प. पुस्तके °रदन्तत्व° पाठः । ७ प. पुस्तके इतः परमाधिकम् सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णुग्रहणं यङ्विधावनेकाजहलाद्यर्थम् । वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिनिषेधार्थमेकाचश्चेडुपग्रहात् ॥

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ॥२५॥**

१ सत्यस्य कृग्याप्युक्च ।

२ णिविधावर्थवेदसत्यानामापुक्च ।

**हेतुमति च ॥ २६ ॥**

१ हेतुमतीति कारकोपादानं प्रत्ययार्थपरिग्रहार्थं यथा तनूकरणे तक्षः ।

२ हेतुनिर्देशश्च निमित्तमात्रं भिक्षादिषु दर्शनात्[1] ।

३ कृष्यादिषु चानुत्पत्तिर्नानाक्रियाणां कृष्यर्थत्वात्[2] ।

४ यज्यादिषु चाविपर्यासो नानाक्रियाणां यज्यर्थत्वात् ।

५ तत्करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम् ।

६ आख्यानात्कृतस्तदाचष्ट इति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ।

७ आख्यानाच्च प्रतिषेधः ।

८ दृश्यर्थायां च प्रवृत्तौ ।

९ आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ।

१० चित्रीकरणे प्रापि ।

११ नक्षत्रयोगे ज्ञि ।

१२ न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम् ।

१३ स्वतन्त्रप्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्यम् ।

१४ प्रवृत्तिर्ह्युभयत्रानपेक्ष्य ।

१५ कुर्वतः प्रयोजक इति चेत्तुल्यम् ।

**कण्ड्वादिभ्यो यक् ॥ २७ ॥**

१ कण्ड्वादिभ्यो वावचनम् ।

२ अवचने हि नित्यप्रत्ययत्वम् ।

३ तत्र धातुविधितुक्प्रतिषेधः

४ ह्रस्वयलोपौ च ।

**गुपूधूपविच्छिपणिपनिभ्य आयः । २८ ।**

**ऋतेरीयङ् ॥ २९ ॥**

**कमेर्णिङ् ॥ ३० ॥**

१ णिङि णित्करणस्य सावकाशत्वाद्वृद्धिप्रतिषेधप्रसङ्गः ।

२ मित्प्रतिषेधस्य चार्थवत्त्वात् ।

३ उक्तं[3] वा ।

**आयादय आर्धधातुके वा ॥ ३१ ॥**

१ आयादिभ्यो यदार्धधातुकमायादिप्रकृतेर्यदार्धधातुकमिति चोभयथानिष्टप्रसङ्गः

२ सिद्धं तु सार्वधातुके नित्यवचनादनाश्रित्य वाविधानम् ।

३ स्यादिबालीयस्त्वं तु विप्रतिषेधेन तुल्यानिमित्तत्वात् ।

४ न वायादिविधानस्यानवकाशत्वात् ।

**सनाद्यन्ता धातवः ॥ ३२ ॥**

१ सनादिष्वन्तग्रहण[4] उक्तम् ।

**स्यतासी लृलुटोः[5] ॥ ३३ ॥**

१ प. पुस्तके इतः परमाधिकम् । कृष्यादिषु चानुत्पत्तिः । २ प. पुस्तके इतः परमधिकम् । यज्यादिषु चाविपर्यासः । ३ प. पुस्तके नास्ति । ४ प. पुस्तके नास्ति । ५ प. पुस्तके इतः परमाधिकम् । अपवादविप्रतिषेधाच्क्लबादिबाधनम् । अपवादो नामानेकलक्षणप्रसङ्गः । अपवादविप्रतिषेधाच्छ्यनादिबाधनम् ।

**सिब्बहुलं लेटि ॥ ३४ ॥**

१ सिबुत्सर्गश्छन्दसि ।

२ सनाद्यन्ते नेषत्वाद्यर्थः ।

३ प्रकृत्यन्तरत्वात्सिद्धम् ।

४ नेषतु[1] नेष्टादिति दर्शनात् ।

५ पित्करणानर्थक्यं चानच्कत्वात् ।

६ इटोऽनुदात्तार्थमिति चेदागमानुदात्तत्वात्सिद्धम् ।

७ सिब्बहुलं छन्दसि णित् ।

**कास्प्रत्ययादाममन्त्रे लिटि ॥ ३५ ॥**

१ कास्ग्रहणे चकास उपसंख्यानम्[2] ।

**इजादेश्च गुरुमतोऽनृच्छः ॥ ३६ ॥**

१ गुरुमत आम्विधाने लिण्निमित्तात्प्रतिषेधः

२ गुरुमद्वचनं किमर्थमिति चेण्णल्युत्तमे यजादिप्रतिषेधार्थम् ।

३ उपदेशवचनात्सिद्धम्[3] ।

४ ऋच्छिप्रतिषेधो ज्ञापक उच्छेराम्भावस्य ।

५ उक्तं वा ।

६ ऊर्णोतेश्चोपसंख्यानम् ।

**दयायासश्च ॥ ३७ ॥**

**उषविदजागृभ्योऽन्यतरस्याम् ॥ ३८ ॥**

१ [4]विदेराम् कित् ।

**भीह्रीभृहुवां श्लुवच्च ॥ ३९ ॥**

१ श्लुवदतिदेशे प्रयोजनं द्वित्वेत्त्वे ।

**कृञ् चानुप्रयुज्यते लिटि ॥ ४० ॥**

१ कृञोऽनुप्रयोगवचनमस्तिभूप्रतिषेधार्थम् ।

२ आत्मनेपदविध्यर्थं च ।

३ इष्टः सर्वानुप्रयोगः ।

४ सर्वानुप्रयोग इति चेदशिष्यमर्थाभावात् ।

५ अर्थाभावाच्चान्यस्य ।

६ लिट्परार्थं वा ।

७ अर्थसमासे सर्वानुप्रयोगो न स्यात् ।

८ विपर्यासनिवृत्त्यर्थं वा ।

९ व्यवहितनिवृत्त्यर्थं च ।

**विदांकुर्वन्त्वित्यन्यतरस्याम् ॥ ४१ ॥**

**अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ॥ ४२ ॥**

**च्लि लुङि ॥ ४३ ॥**

१ च्ल्युत्सर्गः सामान्यग्रहणार्थः ।

२ क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थः ।

३ घस्लभावे च ।

४ श्लेश्चित्करणं विशेषणार्थम् ।

५ इदित्करणं सामान्यग्रहणार्थम् ।

**च्लेः सिच् ॥ ४४ ॥**

१ सिचश्चित्करणानर्थक्यं स्थानिवत्त्वात् ।

२ अर्थवत्तु चित्करणसामर्थ्याध्दीट उदात्तत्वम् ।

३ तस्माच्चित्करणम् ।

४ इदित्करणं नकारलोपाभावार्थम् ।

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । कास्यनेकाच इति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । उच्छेराम्वक्तव्यः । ४ प. पुस्तके नास्ति । ५ प. पुस्तके इतः परमधिकम् निपातनाद्वा गुणत्वमिति भारद्वाजीयाः ।

५ न वा हन्तेः सिचः कित्करणं ज्ञापकं नकारलोपाभावस्य ।

६ इदित्त्वाद् वा स्थानिवत्त्वात् ।

७ स्पृशमृशकृषतृपदृपः सिज्वा[1] ।

**शल इगुपधादनिटः क्सः ॥ ४५ ॥**

१ क्सविधान इगुपधाभावश्श्लेर्गुणानिमित्तत्वात् ।

२ न वा क्सस्यानवकाशत्वादपवादो गुणस्य ।

३ अनिड्वचनमविशेषणं च्लेर्नित्यादिष्टत्वात् ।

४ न वा क्सस्य सिजपवादत्वात्तस्य चानिडाश्रयत्वादनिटि प्रसिद्धे क्सविधिः ।

५ शेषे सिज्विधानम् ।

**श्लिष आलिङ्गने ॥ ४६ ॥**

१ श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावात् ।

२ सिद्धं तु श्लिष आलिङ्गनेऽचिण्विषये ।

३ अङ्विधाने च श्लिषोऽनालिङ्गने ।

४[1] योगविभागात्सिद्धम् ।

**न दृशः ॥ ४७ ॥**

**णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ४८ ॥**

१ णिश्रिद्रुस्रुषु कमेरुपसंख्यानम् ।

२ कर्मकर्तरि च ।

३ न वा कर्मण्यविधानात्कर्तृत्वाच्च कर्मकर्तुः सिद्धम् ।

**विभाषा धेट्श्व्योः ॥ ४९ ॥**

**गुपेश्छन्दसि ॥ ५० ॥**

**नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ५१**

**अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ५२ ॥**

१ अस्यतिग्रहणमात्मनेपदार्थम्[2] ।

२ कर्मकर्तरि च ।

**लिपिसिचिह्वश्च ॥ ५३ ॥**

**आत्मनेपदेष्वन्यतरस्याम् ॥ ५४ ॥**

**पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥ ५५ ॥**

**सर्तिशास्त्यर्तिभ्यश्च ॥ ५६ ॥**

**इरितो वा ॥ ५७ ॥**

**जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥**

**कृमृदृरुहिभ्यश्छन्दसि ॥ ५९ ॥**

**चिण् ते पदः ॥ ६० ॥**

**दीपजनबुधपूरितायिप्यायिभ्यो ऽन्यतरस्याम् ॥ ६१ ॥**

**अचः कर्मकर्तरि ॥ ६२ ॥**

**दुहश्च ॥ ६३ ॥**

**न रुधः ॥ ६४ ॥**

**तपो ऽनुतापे च ॥ ६५ ॥**

**चिण् भावकर्मणोः ॥ ६६ ॥**

**सार्वधातुके यक् ॥ ६७ ॥**

१ भावकर्मकर्तारः सार्वधातुकार्थाश्चैकद्विबहुषु नियमानुपपत्तिरतदर्थत्वात् ।

२ विकरणार्था इति चेत्क्तामिहिते विकरणाभावः ।

१ प पुस्तके इतः परमधिकम् । सिद्धं तु सिचो यादित्वात् । चङ्क्सोः प्रश्लिष्टनिर्देशात्सिद्धम् । चिणोऽदित्वात् ॥ २ प. पुस्तके इतः परमाधिकम् । पुषादित्वात् ।

३ भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानम् ।
४ विप्रतिषेधाद्धि शपो बलीयस्त्वम् ।
५ योगविभागात्सिद्धम् ।

कर्तरि शप् ॥ ६८ ॥

दिवादिभ्यः श्यन् ॥ ६९ ॥

वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ७० ॥

यसो ऽनुपसर्गात् ॥ ७१ ॥

संयसश्च ॥ ७२ ॥

स्वादिभ्यः श्नुः ॥ ७३ ॥

श्रुवः शृ च ॥ ७४ ॥

अक्षो ऽन्यतरस्याम् ॥ ७५ ॥

तनूकरणे तक्षः ॥ ७६ ॥

तुदादिभ्यः शः ॥ ७७ ॥

रुधादिभ्यः श्नम् ॥ ७८ ॥

१ श्नमि शित्करणं प्वादिह्रस्वार्थम् ।
२ न वा धात्वन्यत्वात् ।
३ बहुलं पित्सार्वधातुकं छन्दसि ।

तनादिकृञ्भ्य उः ॥ ७९ ॥

धिन्विकृण्व्योर च ॥ ८० ॥

क्र्यादिभ्यः श्ना ॥ ८१ ॥

स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ८२ ॥

हलः श्नः शानज्झौ ॥ ८३ ॥

१ श्नाविकारस्य शित्करणानर्थक्यं स्थानिवत्त्वात् ।
२ अर्थवत्तु ज्ञापकं सार्वधातुकादेशेऽनुबन्धास्थानिवत्त्वस्य ।
३ प्रयोजनं हितातङोरपित्त्वम् ।
४ तबादिषु चाङित्त्वम् ।
५ तस्य दोषो मिप आदेशे पिद्भावः ।
६ विदेर्वसोः शित्त्वम् ।
७ कित्करणाद्वा सिद्धम् ।

छन्दसि शायजपि ॥ ८४ ॥

१ शायच्छन्दसि सर्वत्र ।

व्यत्ययो बहुलम् ॥ ८५ ॥

लिङ्याशिष्यङ् ॥ ८६ ॥

१ आशिष्यङः प्रयोजनं स्थागागमिवचिविदयः[1] ।
२ दृशेरक् पितरं च दृशेयं मातरं च ।

कर्मवत्कर्मणा तुल्यक्रियः ॥ ८७ ॥

१ कर्मवदकर्मकस्य कर्ता ।
२ कर्म दृष्टश्चेत्समानधातौ ।
३ कर्मस्थभावकानां कर्मस्थक्रियाणां च ।
४ आत्मनेपदशबादिविधिप्रतिषेधः ।
५ कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात् ।
६ तत्र लान्तस्य कर्मवदनुदेशः ।
७ इतरथा हि कृत्यक्तखलर्थेषु प्रतिषेधः ।
८ सिद्धं तु प्राकृतकर्मत्वात् ।
९ आत्मसंयोगे कर्मकर्तुः कर्मदर्शनात् ।
१० पदलोपश्च ।
११ सकर्मकाणां प्रतिषेधोऽन्योऽन्यमाश्लिष्यत इति ।

१ प. पुस्तके इतः परमधिकम् । शकिरहोश्चेति वक्तव्यम् ।

१२ तपेर्वा सकर्मकस्य वचनं नियमार्थम् ।
१३ तस्य च तपःकर्मकस्यैव ।
१४ दुहिपच्योर्बहुलं सकर्मकयोः ।
१५ सृजियुज्योः श्यंस्तु ।
१६ करणेन तुल्यक्रियः कर्ता बहुलम् ।
१७ स्रवत्यादीनां प्रतिषेधः ।
१८ भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात् ।

**तपः तपःकर्मकस्यैव ॥ ८८ ॥**

**न दुहस्नुनमां यक्चिणौ ॥ ८९ ॥**

१ यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञा-मुपसंख्यानम्[1] ।

**कुषिरजोः प्राचां श्यन् परस्मैपदं च ।९०।**

१ कुषिरजोः श्यन्विधाने सार्वधातुकवचनम्
२ अवचने हि लिङ्लिटोः प्रतिषेधः ।

**धातोः ॥ ९१ ॥**

१ धात्वधिकारः प्राग्लादेशात् ।
२ लादेशे हि व्यवहितत्वादप्रसिद्धिः ।
३ प्रयोजनं प्रातिपदिकप्रतिषेधः ।
४ स्वपादिषु ।
५ अङ्गसंज्ञा च ।
६ कृत्संज्ञा च ।
७ उपपदसंज्ञा च ।
८ धातुग्रहणमनर्थकं यङ्विधौ धात्वधि-कारात् ।
९ अनधिकारे ह्यङ्गसंज्ञाभावः ।
१० हेतुमद्वचनं तु ज्ञापकमन्यत्राभावस्य ।
११ कण्ड्वादिषु च व्यपदेशिवद्वचनात्[2] ।

**तत्रोपपदं सप्तमीस्थम् ॥ ९२ ॥**

१ तत्रग्रहणं विषयार्थम् ।
२ उपपदसंज्ञायां समर्थवचनम् ।
३ निमित्तोपादानं च
४ अनुपादाने ह्यनुपपदे प्रत्ययप्रसङ्गः ।
५ निर्देशः संज्ञाकरणार्थः ।
६ तत्रवचनमुपपदसंनियोगार्थम् ।

**कृदतिङ् ॥ ९३ ॥**

**वासरूपोऽस्त्रियाम् ॥ ९४ ॥**

१ असरूपस्य वावचनमुत्सर्गस्य बाधक-विषयेऽनिवृत्त्यर्थम् ।
२ तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धिते ।
३ सिद्धं त्वसरूपस्य बाधकस्य वावचनात् ।
४ अनुबन्धभिन्नेषु विभाषाप्रसङ्गः ।
५ सिद्धमनुबन्धस्यानेकान्तत्वात् ।
६ प्रयोगे चेल्लादेशेषु प्रतिषेधः ।
७ स्त्रियां प्रतिषेधे क्त्युट्तुमुन्खलर्थेषु विभाषाप्रसङ्गः ।
८ स्त्रियाः प्रागिति चेत्क्त्वायां वावच-नम् ।
९ कालादिषु तुमुनि ।
१० अर्हे तृज्विधानम् ।

१ प. पुस्तके इतः परमधिकम् । यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुप-संख्यानमिति भारद्वाजपाठः । २ प. पुस्तके इतः परमधिकम् । आद्ये योगे न व्यवाये तिङः स्युः । न स्यादेत्वं टेष्टितां यद्विधत्ते । एशः शित्त्वम् । यच्च लोटो विधत्ते । यच्चाप्युक्तं लिङ्लिटोस्तच्च न स्यात् ॥ ३ प पुस्तके सिद्धमधिकम् ।

**कृत्याः ॥ ९५ ॥**

१ कृत्यसंज्ञायां प्राङ्ण्वुल्वचनम्[1] ।

२ अर्हे कृत्यतृज्वचनं तु ज्ञापकं प्राङ्ण्वुल्वचनानर्थक्यस्य ।

**तव्यत्तव्यानीयरः ॥ ९६ ॥**

१ केलिमर उपसंख्यानम् ।

२ वसेस्तव्यत्कर्तरि णिच्च ।

३ तद्धितो वा ।

**अचो यत् ॥ ९७ ॥**

१ यति जनेरुपसंख्यानम् ।

२ हनो वा वध च ।

३ तद्धितो वा ।

**पोरदुपधात् ॥ ९८ ॥**

**शकिसहोश्च ॥ ९९ ॥**

**गदमदचरयमश्चानुपसर्गे ॥ १०० ॥**

१ अनुपसर्गाच्चरेराङि चागुरौ ।

**अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ १०१ ॥**

**वह्यं करणम् ॥ १०२ ॥**

**अर्यः स्वामिवैश्ययोः ॥ १०३ ॥**

१ स्वामिन्यन्तोदात्तत्वं च ।

**उपसर्या काल्या प्रजने ॥ १०४ ॥**

**अजर्यं संगतम् ॥ १०५ ॥**

१ अजर्यं कर्तरि ।

**वदः सुपि क्यप् च ॥ १०६ ॥**

१ वदः सुप्यनुपसर्गग्रहणम् ।

**भुवो भावे ॥ १०७ ॥**

**हनस्त च ॥ १०८ ॥**

१ हनस्तश्चित्स्त्रियां छन्दसि ।

**एतिस्तुशास्वृदृजुषः क्यप् ॥ १०९ ॥**

१ क्यब्विधौ वृञ्ग्रहणम्[2] ।

२ अञ्जेश्चोपसंख्यानं संज्ञायाम्[3] ।

**ऋदुपधाच्चाक्लृपिचृतेः ॥ ११० ॥**

**ई च खनः ॥ १११ ॥**

**भृञोऽसंज्ञायाम् ॥ ११२ ॥**

१ भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वात् ।

२ प्रतिषेधः किमर्थ इति चेदस्त्रीसंज्ञाप्रतिषेधार्थः ।

३ सिद्धं तु स्त्रियां संज्ञाप्रतिषेधात्[5] ।

४ समश्च बहुलम् ।

**मृजेर्विभाषा ॥ ११३ ॥**

**राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ११४ ॥**

१ सूर्यरुच्याव्यथ्याः कर्तरि ।

२ कुप्यं संज्ञायाम् ।

३ कृष्टपच्यस्यान्तोदात्तत्वं च कर्मकर्तरि च ।

---

१ अत्र काशिकायां 'कृत्याः प्राङ्ण्वुलः' इति पाठः । परं स महाभाष्यासंमत इति न गृहीतः वै. पुस्तके तु काशिकावदुपलभ्यते । २ प. पुस्तके तकिशासिचातिजनि° इत्यधिकम् । ३ प. पुस्तके नास्ति । ४ प. पुस्तके इतः परमधिकम् । शासिदुहिगुहिभ्यो वेति वक्तव्यमिति काशिका । ५ प. पुस्तके इतः परमधिकम् । संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्ध्यति । स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति । अथवा बहुलं कृत्याः संज्ञायामिति तत्स्मृतम् । यथा यत्यं यथा जन्यं यथा भित्तिस्तथैव सा ।

भिद्योद्ध्यौ नदे ॥ ११५ ॥
पुष्यसिध्यौ नक्षत्रे ॥ ११६ ॥
विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ ११७ ॥
प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥ ११८ ॥
१ [1]प्रत्यपिभ्यां ग्रहेश्छन्दसि ।
पदास्वैरिबाह्यापक्ष्येषु च ॥ ११९ ॥
विभाषा कृवृषोः ॥ १२० ॥
युग्यं च पत्त्रे ॥ १२१ ॥
अमावस्यदन्यतरस्याम् ॥ १२२ ॥
छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥ १२३ ॥
ऋहलोर्ण्यत् ॥ १२४ ॥
१ पाणौ सृजेर्ण्यद्विधिः ।
२ समवपूर्वाच्च ।
३ लपिदभिभ्यां च ।
ओरावश्यके ॥ १२५ ॥
१ आवश्यक उपपद इति चेद्द्योत्य उपसंख्यानम् ।
२ द्योत्य इति चेत्स्वरसमासानुपपत्तिः ।
३ ओरावश्यके ण्यतः स्तौतेः क्यप्पूर्वविप्रतिषिद्धम् ।
आसुयुवपिरपिलपित्रपिचमश्च ॥ १२६ ॥
आनाय्योऽनित्ये ॥ १२७ ॥
प्रणाय्योऽसंमतौ ॥ १२८ ॥
पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ १२९ ॥
१ पाय्यनिकाय्योरादिपत्वकत्वनिपातनम् ।
क्रतौ कुण्डपाय्यसंचाय्यौ ॥ १३० ॥
१ कुण्डपाय्ये यद्विधिः ।
अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ १३१ ॥
१ समूह्य इत्यनर्थकं वचनं सामान्येन कृतत्वात् ।
२ वह्यर्थमिति चेदूहेस्तदर्थत्वात्सिद्धम् ।
३ ऊहिविग्रहाच्च ब्राह्मणे सिद्धम् ।
चित्याग्निचित्ये च ॥ १३२ ॥
१ अग्निचित्या भावेऽन्तोदात्तः[3] ।
ण्वुल्तृचौ ॥ १३३ ॥
१ ण्वुलि सकर्मकग्रहणम् ।
२ न वा धातुमात्राद्दर्शनाण्ण्वुलः ।
३ तृजादिषु वर्तमानकालोपदानमध्यायकवेदाध्यायाद्यर्थम् ।
४ न वा कालमात्रे दर्शनादन्येषाम् ।
नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ १३४ ॥
१ अजपि सर्वधातुभ्यः ।
२ पचाद्यनुक्रमणमनुबन्धासञ्जनार्थमपवादबाधनार्थं च ।
इगुपधज्ञाप्रीकिरः कः ॥ १३५ ॥
१ इगुपधेभ्य उपसर्गे कविधिर्मेषाद्यर्थः ।
२ न वा बुधादीनां दर्शनादनुपसर्गेऽपि ।
आतश्चोपसर्गे ॥ १३६ ॥
पाघ्राध्माधेट्दृशः शः ॥ १३७ ॥

१ प. पुस्तके इत्यधिकम् । हिरण्य इति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । दाक्षिणाग्नाविति वक्तव्यम् । ३ प. पुस्तके ' भावे ' इति नास्ति ।

१ जिघ्रः संज्ञायां प्रतिषेधः ।

**अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजि-चेतिसातिसाहिभ्यश्च ॥ १३८ ॥**

१ अनुपसर्गान्नौ लिम्पेः ।

२ गवि च विन्देः संज्ञायाम् ।

**ददातिदधात्योर्विभाषा ॥ १३९ ॥**

**ज्वलितिकसन्तेभ्यो णः ॥ १४० ॥**

१ तनोतेर्ण उपसंख्यानम् ।

**श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्व-सश्च ॥ १४१ ॥**

**दुन्योरनुपसर्गे ॥ १४२ ॥**

**विभाषा ग्रहः ॥ १४३ ॥**

**गेहे कः ॥ १४४ ॥**

**शिल्पिनि ष्वुन् ॥ १४५ ॥**

**गस्थकन् ॥ १४६ ॥**

**ण्युट् च ॥ १४७ ॥**

**हश्च व्रीहिकालयोः ॥ १४८ ॥**

**प्रुसृल्वः समभिहारे वुन् ॥ १४९ ॥**

१ प्रुसृल्वः साधुकारिणि वुन्विधानम् ।

**आशिषि च ॥ १५० ॥**

॥ इति तृतीयाध्यायस्य प्रथमः पादः ॥

---

**कर्मण्यण्**[2] **॥ १ ॥**

१ कर्मणि निर्वर्त्यमानविक्रियमाणे चेद्वे-दाध्यायादीनामुपसंख्यानम् ।

२ यत्र च नियुक्तः ।

३ ह्वयहिनीवहिभ्यश्च ।

४ अपरिगणनं वा ।

५ अनभिधानात् ।

६ अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन

७ शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्र-कृतिस्वरत्वं च ।

८ ईक्षिक्षमिभ्यां च[3] ।

९ अन्नदायेति च कृतां व्यत्ययश्छन्दसि ।

**ह्वावामश्च ॥ २ ॥**

**आतोऽनुपसर्गे कः ॥ ३ ॥**

१ कविधौ सर्वत्र प्रसारणिभ्यो डः ।

२ के हि संप्रसारणप्रसङ्गः ।

**सुपि स्थः ॥ ४ ॥**

१ सुपि स्थो भावे च ।

२ योगविभागात्सिद्धम् ।

**तुन्दशोकयोः परिमृजापनुदोः ॥ ५ ॥**

१ तुन्दशोकयोः परिमृजापनुदोरालस्य-सुखाहरणयोः ।

२ कप्रकरणे मूलविभुजादिभ्य उपसंख्या-नम् ।

**प्रे दाज्ञः ॥ ६ ॥**

**समि ख्यः ॥ ७ ॥**

**गापोष्टक् ॥ ८ ॥**

१ सुरासाध्वोः पिबतेः ।

२ बहुलं तणि ।

**हरतेरनुद्यमनेऽच् ॥ ९ ॥**

१ अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितो-मरघटघटीधनुःषु ग्रहेरुपसंख्यानम् ।

---

१ प. पुस्तके इतः परमधिकम् । नृतिखनिरञ्जिभ्य इति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । कर्माणि निर्वर्त्यमानविक्रियमाण इति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । न त्वम्भोऽभिगमा ।

२ सूत्रे च धार्यर्थे ।

वयसि च ॥ १० ॥

आङि ताच्छील्ये ॥ ११ ॥

अर्हः ॥ १२ ॥

स्तम्बकर्णयो रमिजपोः ॥ १३ ॥

१ स्तम्बकर्णयोर्हस्तिसूचकयोः ।

शमि धातोः संज्ञायाम् ॥ १४ ॥

१ शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम् ।

अधिकरणे शेतेः ॥ १५ ॥

१ अधिकरणे शेतेः पार्श्वादिषूपसंख्यानम् ।

२ दिग्धसहपूर्वाच्च ।

३ उत्तानादिषु कर्तृषु ।

४ गिरौ डश्छन्दसि ।

५ तद्धितो वा ।

चरेष्टः ॥ १६ ॥

१ चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य ।

भिक्षासेनादायेषु च ॥ १७ ॥

पुरोऽग्रतोऽग्रेषु सर्तेः ॥ १८ ॥

पूर्वे कर्तरि ॥ १९ ॥

कृञो हेतुताच्छील्यानुलोम्येषु ॥ २० ॥

दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु ॥ २१ ॥

१ किंयत्तद्बहुषु कृञोऽज्विधानम् ।

कर्मणि भृतौ ॥ २२ ॥

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २३ ॥

स्तम्बशकृतोरिन् ॥ २४ ॥

१ स्तम्बशकृतोर्व्रीहिवत्सयोः ।

हरतेर्दृतिनाथयोः पशौ ॥ २५ ॥

फलेग्रहिरात्मंभरिश्च ॥ २६ ॥

१ भृञः कुक्ष्यात्मनोर्मुम्च ।

छन्दसि वनसनरक्षिमथाम् ॥ २७ ॥

एजेः खश् ॥ २८ ॥

१ खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः ।

नासिकास्तनयोर्ध्माधेटोः ॥ २९ ॥

१ स्तने धेटः ।

२ [1]मुष्टौ ध्मश्च ।

नाडीमुष्ट्योश्च ॥ ३० ॥

उदि कूले रुजिवहोः ॥ ३१ ॥

वहाभ्रे लिहः ॥ ३२ ॥

परिमाणे पचः ॥ ३३ ॥

मितनखे च ॥ ३४ ॥

विध्वरुषोस्तुदः ॥ ३५ ॥

असूर्यललाटयोर्दृशितपोः ॥ ३६ ॥

उग्रंपश्येरंमदपाणिंधमाश्च ॥ ३७ ॥

प्रियवशे वदः खच् ॥ ३८ ॥

१ खच्प्रकरणे गमेः सुप्युपसंख्यानम् ।

२ विहायसो विह च ।

३ खच्च डिद्वा ।

४ डे च[3] ।

१ प. पुस्तके इतः परमधिकम् । नासिकायां ध्मश्च धेटश्च । नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम् । २ प. पुस्तके इदं नास्ति । ३ प. पुस्तके इतः परमधिकम् । भगे च दारेरिति काशिका ।

द्विषत्परयोस्तापेः ॥ ३९ ॥

वाचि यमो व्रते ॥ ४० ॥

पूःसर्वयोर्दारिसहोः ॥ ४१ ॥

सर्वकूलाभ्रकरीषेषु कषः ॥ ४२ ॥

मेघर्तिभयेषु कृञः ॥ ४३ ॥

क्षेमप्रियमद्रे ऽण् च ॥ ४४ ॥

आशिते भुवः करणभावयोः ॥ ४५ ॥

संज्ञायां भृतॄवृजिधारिसहितपिदमः ॥४६॥

गमश्च ॥ ४७ ॥

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ४८ ॥

१ डपकरणे सर्वत्रपन्नयोरुपसंख्यानम्।

२ उरसो लोपश्च।

३ सुदुरोरधिकरणे।

४ निसो देशे।

आशिषि हनः ॥ ४९ ॥

१ दारावाहनोऽणन्त्यस्य च टः संज्ञायाम्।

२ चारौ वा।

३ कर्मणि समि च।

अपे क्लेशतमसोः ॥ ५० ॥

कुमारशीर्षयोर्णिनिः ॥ ५१ ॥

लक्षणे जायापत्योष्टक् ॥ ५२ ॥

अमनुष्यकर्तृके च ॥ ५३ ॥

शक्तौ हस्तिकपाटयोः ॥ ५४ ॥

पाणिघताडघौ शिल्पिनि ॥ ५५ ॥

१ राजघ उपसंख्यानम्।

आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्[1] ॥ ५६ ॥

१ ख्युनि च्विप्रतिषेधानर्थक्यं ल्युट्ख्युनो-रविशेषात्।

२ मुमर्थमिति चेन्नाव्ययत्वात्।

३ उत्तरार्थं तु।

कर्तरि भुवः खिष्णुच्खुकञौ[2] ॥ ५७ ॥

स्पृशो ऽनुदके क्विन् ॥ ५८ ॥

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ५९ ॥

१ धृषेर्द्विर्वचनमन्तोदात्तत्वं च।

त्यदादिषु दृशो ऽनालोचने कञ् च ॥६०॥

१ दृशेः समानान्ययोश्चोपसंख्यानम्[3]।

२ कृदर्थानुपपत्तिस्तु।

३ इवार्थे तु तद्धितः।

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजि-नीराजामुपसर्गे ऽपि क्विप् ॥ ६१ ॥

१ सदादिषु सुब्ग्रहणम्।

भजो ण्विः ॥ ६२ ॥

छन्दसि सहः ॥ ६३ ॥

वहश्च ॥ ६४ ॥

कव्यपुरीषपुरीष्येषु ञ्युट् ॥ ६५ ॥

हव्ये ऽनन्तःपादम् ॥ ६६ ॥

जनसनखनक्रमगमो विट् ॥ ६७ ॥

अदो ऽनन्ने ॥ ६८ ॥

क्रव्ये च ॥ ६९ ॥

---

१ प. पुस्तके इतः परमधिकम्। अन्येष्वपि दृश्यते। २ प. पुस्तके इतः परमधिकम्। इष्णुच इकारादित्वमुदात्तत्वात्कृतं भुवः। नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः। ३ प. पुस्तके इतः परमधिकम् दृशेः क्सो वक्तव्यः इति काशिका।

१ अदोऽनन्ने क्रव्येग्रहणं वासरूपनिवृत्त्यर्थम् ।

दुहः कब्घश्च ॥ ७० ॥

मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ७१

१ श्वेतवहादीनां डस् ।

२ पदस्य च ।

३ वेर्थम् ।

अवे यजः ॥ ७२ ॥

[illegible]उपे छन्दसि ॥ ७३ ॥

आतो मनिन्क्वनिब्वनिपश्च ॥ ७४ ॥

अन्येभ्यो ऽपि दृश्यन्ते ॥ ७५ ॥

क्विप् च ॥ ७६ ॥

स्थः क च ॥ ७७ ॥

सुप्यजातौ णिनिस्ताच्छील्ये ॥ ७८ ॥

१ णिन्विधौ साधुकारिण्युपसंख्यानम् ।

२ ब्रह्मणि: वदः ।

कर्तर्युपमाने ॥ ७९ ॥

व्रते ॥ ८० ॥

बहुलमाभीक्ष्ण्ये ॥ ८१ ॥

मनः ॥ ८२ ॥

आत्ममाने खश्च ॥ ८३ ॥

१ कर्मकर्तरि च ।

भूते ॥ ८४ ॥

१ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः ।

२ अव्ययनिर्देशात्सिद्धम् ।

३ न वा तद्विधानस्यान्यत्राभावात् ।

४ भूताधिकारस्य प्रयोजनं कुमारघाती शीर्षघाती आखुहा बिडालः सुत्वानः सुन्वन्तः सुषुपुषोऽनेहा अग्निमादधानस्य ।

करणे यजः ॥ ८५ ॥

कर्मणि हनः ॥ ८६ ॥

ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ८७ ॥

१ ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् ।

२ तथा चोत्तरस्य वचनार्थः ।

बहुलं छन्दसि ॥ ८८ ॥

सुकर्मपापमन्त्रपुण्येषु कृञः ॥ ८९ ॥

सोमे सुञः ॥ ९० ॥

अग्नौ चेः ॥ ९१ ॥

कर्मण्यग्न्याख्यायाम् ॥ ९२ ॥

कर्मणीनिर्विक्रियः ॥ ९३ ॥

१ कर्मणि कुत्सिते ।

दृशेः क्वनिप् ॥ ९४ ॥

राजनि युधिकृञः ॥ ९५ ॥

सहे च ॥ ९६ ॥

सप्तम्यां जनेर्डः ॥ ९७ ॥

पञ्चम्यामजातौ ॥ ९८ ॥

उपसर्गे च संज्ञायाम् ॥ ९९ ॥

अनौ कर्मणि ॥ १०० ॥

अन्येष्वपि दृश्यते ॥ १०१ ॥

निष्ठा ॥ १०२ ॥

१ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः ।

२ द्विर्वा क्तक्तवतुग्रहणम् ।

३ आदिकर्मणि निष्ठा ।

४ यद्वा भवन्त्यर्थे ।

५ न्याय्या त्वाद्यपवर्गात् ।

६ वा चाद्यतन्याम् ।

१ प. पुस्तके इतः परमधिकम् । अन्येभ्योऽपि दृश्यते ।

**सुयजोर्ङ्वनिप् ॥ १०३ ॥**
**जीर्यतेरतृन् ॥ १०४ ॥**
**छन्दसि लिट् ॥ १०५ ॥**
**लिटः कानज्वा ॥ १०६ ॥**
**क्वसुश्च ॥ १०७ ॥**

१ कानच्क्वसोर्वावचनं छन्दसि तिङो दर्शनात् ।
२ न वानेन विहितस्यादेशवचनात् ।
३ कित्करणं संयोगान्तार्थम् ।
४ ऋकारान्तगुणप्रतिषेधार्थं वा ।

**भाषायां सदवसश्रुवः ॥ १०८ ॥**

१ भाषायां सदादिभ्यो वा लिट् ।
२ तद्विषये लुङोऽनिवृत्त्यर्थम् ।
३ अनद्यतनपरोक्षयोश्च ।
४ अपवादविप्रतिषेधाद्धि तयोर्भावः ।
५ तस्य क्वसुरपरोक्षे नित्यम् ।

**उपेयिवाननाश्वाननूचानश्च[1] ॥ १०९ ॥**

१ उपेयुषि निपातनमिडर्थमिति चेदजादावनिप्रसङ्गः ।
२ एकादिष्टस्येड्भावार्थं तु ।
३ व्यञ्जने यणादेशार्थं वा ।
४ अनूचानः कर्तरि ।

**लुङ् ॥ ११० ॥**

१ लुङ्लृटोरपवादप्रसङ्गो भूतभविष्यतोरविशेषवचनात् ।
२ न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम् ।
३ वसेर्लुङ् रात्रिशेषे ।
४ जागरणसंततौ ।

**अनद्यतने लङ् ॥ १११ ॥**

१ अनद्यतन इति बहुव्रीहिनिर्देशोऽद्यह्योऽभुक्ष्महीति ।
२ परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये ।

**अभिज्ञावचने लृट् ॥ ११२ ॥**
**न यदि ॥ ११३ ॥**
**विभाषा साकाङ्क्षे ॥ ११४ ॥**

१ विभाषा साकाङ्क्षे सर्वत्र ।

**परोक्षे[3] लिट् ॥ ११५ ॥**

१ परोक्षे लिडत्यन्तापह्नवे च ।

**हशश्वतोर्लङ् च ॥ ११६ ॥**
**प्रश्ने चासन्नकाले ॥ ११७ ॥**
**लट् स्मे ॥ ११८ ॥**

१ स्पपुरा भूतमात्रे न स्पपुराद्यतने ।

**अपरोऽक्षे च ॥ ११९ ॥**
**ननौ पृष्टप्रतिवचने ॥ १२० ॥**

१ ननौ पृष्टप्रतिवचन इत्यशिष्यं क्रियासमासेर्विवक्षितत्वात् ।

**नन्वोर्विभाषा ॥ १२१ ॥**
**पुरि लुङ् चास्मे ॥ १२२ ॥**

---

१ प. पुस्तके इतः परमधिकम् । उपेयुषि निपातमिडर्थम् । २ प. पुस्तके इतः परमधिकम् । नोपेयिवान्निपात्यो द्विर्वचनादिडभविष्यति परत्वात् । अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य । द्विर्वचने चैकाच्त्वात् । तस्मादिड् बाधते द्वित्वम् । ३ प. पुस्तके इतः परमधिकम् । परोभवः परस्याक्षे परोक्षे लिटि दृश्यताम् । उत्वं वादेः परादक्ष्णः सिद्धं वास्मान्निपातनात् ।

१ हशश्वद्युगे पुरा ।

२ स्मः सर्वेभ्यो विप्रतिषेधेन ।

**वर्तमाने लट् ॥ १२३ ॥**

१ प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वात् ।

२ नित्यप्रवृत्ते च कालाविभागात् ।

३ न्याय्या त्वारम्भानपवर्गात् ।

४ अस्ति च मुक्तसंशये विरामः ।

५ सन्ति च कालविभागाः ।

**लटः शतृशानचावप्रथमासमानाधिकरणे ॥ १२४ ॥**

१ लस्याप्रथमासमानाधिकरणेनायोगादादेशानुपपत्तिर्यथान्यत्र ।

२ योग इति चेदन्यत्रापि योगः स्यात् ।

३ लटः शतृशानचावप्रथमासमानाधिकरण इति चेत्प्रत्ययोत्तरपदयोरुपसंख्यानम् ।

४ प्रथमाप्रतिषेध उत्तरपद आदेशानुपपत्तिः।

५ सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् ।

६ तत्र प्रत्ययस्यादेशानिमित्तत्वादप्रसिद्धिः।

७ उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः ।

८ न वा लकारस्य कृत्त्वात्प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम् ।

९ तिङादेशात्सुबुत्पत्तिः ।

१० तस्मादुत्तरपदप्रसिद्धिः ।

**संबोधने च ॥ १२५ ॥**

**लक्षणहेत्वोः क्रियायाः ॥ १२६ ॥**

१ लक्षणहेत्वोः क्रियाया गुण उपसंख्यानम्।

२ कर्तुश्च लक्षणयोः पर्यायेणाचयोगे ।

३ तत्त्वाख्याने च ।

४ सदादयश्च बहुलम् ।

५ इङ्जुहोत्योर्वावचनम् ।

६ माङ्याक्रोशे ।

**तौ सत् ॥ १२७ ॥**

१ तौ सदिति वचनमसंसर्गार्थम्[1] ।

२ उत्तरयोर्लादेशे वावचनम् ।

३ साधनाभिधानम् ।

४ स्वरः ।

५ उपग्रहप्रतिषेधश्च ।

६ अलादेशे षष्ठीप्रतिषेधः ।

७ द्विषः शतुर्वावचनम् ।

**पूङ्यजोः शानन् ॥ १२८ ॥**

**ताच्छील्यवयोवचनशक्तिषु चानश् ॥ १२९ ॥**

**इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३० ॥**

**द्विषोऽमित्रे ॥ १३१ ॥**

**सुञो यज्ञसंयोगे ॥ १३२ ॥**

**अर्हः प्रशंसायाम् ॥ १३३ ॥**

**आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ १३४ ॥**

**तृन् ॥ १३५ ॥**

१ तृन्विधावृत्विक्षु चानुपसर्गस्य ।

२ नयतेः षुक्च ।

१ प. पुस्तके इतः परं नास्ति । २ प. पुस्तके इतः परमधिकम् । अवधारणं लटि विधानम्। योगविभागतश्च विहितं सत् ।

३ न वा धात्वन्यत्वात् ।
४ नेषतु नेष्टादिति दर्शनात् ।
५ त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च ।
६ क्षदेश्च युक्ते ।
७ छन्दसि तृच ।

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ॥१३६॥
णेश्छन्दसि ॥ १३७ ॥
भुवश्च ॥ १३८ ॥
ग्लाजिस्थश्च क्स्नुः ॥ १३९ ॥
१ क्नोः कित्त्वे स्थ ईकारप्रतिषेधः ।
२ अकिति गुणप्रतिषेधः ।
३ भुव इट्प्रतिषेधश्च ।
४ स्थादंशिभ्यां स्नुश्छन्दसि[1] ।

त्रसिगृधिधृषिक्षिपेः क्नुः ॥ १४० ॥
शमित्यष्टाभ्यो घिनुण् ॥ १४१ ॥
१ घिनुणकर्मकाणाम् ।
२ उक्तं[2] वा ।

संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ॥ १४२ ॥
वौ कषलसकत्थस्रम्भः ॥ १४३ ॥
अपे च लषः ॥ १४४ ॥
प्रे लपसृद्रुमथवदवसः ॥ १४५ ॥

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ॥
१ वुञमनेकाचः ।
२ निन्दादिभ्यो वुञ्वचनमन्येभ्यो ण्वुलः प्रतिषेधार्थम् ।
३ तृजादिप्रतिषेधार्थं वैके ।

देविक्रुशोश्चोपसर्गे ॥ १४७ ॥
चलनशब्दार्थादकर्मकाद्युच् ॥ १४८ ॥
अनुदात्तेतश्च हलादेः ॥ १४९ ॥
जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ १५० ॥
१ पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरिति सिद्धत्वात् ।
२ असरूपनिवृत्त्यर्थं तु ।

क्रुधमण्डार्थेभ्यश्च ॥ १५१ ॥
न यः ॥ १५२ ॥
सूददीपदीक्षश्च ॥ १५३ ॥
लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ॥ १५४ ॥
जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ १५५
प्रजोरिनिः ॥ १५६ ॥
जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥ १५७ ॥
स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥ १५८ ॥
१ आलुचि शीङ्ग्रहणम् ।

दाधेट्सिशदसदो रुः ॥ १५९ ॥

---

१ प. पुस्तके इतः परमाधिकम् । क्नोर्गित्त्वान्न स्थ ईकारः । क्ङितोरीत्त्वशासनात् । गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः । २ इदं प. पुस्तके नास्ति ।

सृघस्यदः क्मरच् ॥ १६० ॥
भञ्जभासमिदो घुरच् ॥ १६१ ॥
विदिभिदिच्छिदेः कुरच् ॥ १६२ ॥
इण्नशजिसर्तिभ्यः क्वरप् ॥ १६३ ॥
गत्वरश्च ॥ १६४ ॥
जागरूकः ॥ १६५ ॥
यजजपदशां यङः ॥ १६६ ॥
नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥ १६७ ॥
सनाशंसभिक्ष उः ॥ १६८ ॥
विन्दुरिच्छुः ॥ १६९ ॥
क्याच्छन्दसि ॥ १७० ॥
आदृगमहनजनः किकिनौ लिट् च ॥ १७१ ॥

१ किकिनोः कित्त्वमृकारगुणप्रतिषेधार्थम् ।
२ उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् ।
३ भाषायां धाञ्कृसृजनिनमिभ्यः ।
४ सासहिवावहिचाचलिपापतीनां निपातनम् ।

स्वपितृषोर्नजिङ् ॥ १७२ ॥
शॄवन्द्योरारुः ॥ १७३ ॥
भियः क्रुक्लुकनौ[1] ॥ १७४ ॥
स्थेशभासपिसकसो वरच् ॥ १७५ ॥
यश्च यङः ॥ १७६ ॥
भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥ १७७ ॥
अन्येभ्यो ऽपि दृश्यते ॥ १७८ ॥

१ क्विब्विधिरनुपपदार्थः ।
२ वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च ।
३ द्युतिगमिजुहोतीनां द्वे च[3] ।
४ ध्यायतेः संप्रसारणं च ।

भुवः संज्ञान्तरयोः ॥ १७९ ॥
विप्रसम्भ्यो ड्वसंज्ञायाम्[2] ॥ १८० ॥
धः कर्मणि ष्ट्रन् ॥ १८१ ॥
दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥ १८२ ॥
हलसूकरयोः पुवः ॥ १८३ ॥
अर्तिलूधूसूखनसहचर इत्रः ॥ १८४ ॥
पुवः संज्ञायाम् ॥ १८५ ॥
कर्तरि चर्षिदेवतयोः ॥ १८६ ॥
ञीतः क्तः ॥ १८७ ॥
मतिबुद्धिपूजार्थेभ्यश्च ॥ १८८ ॥

इति तृतीयाध्यायस्य द्वितीयः पादः ।

उणादयो बहुलम्[4] ॥ १ ॥
भूते ऽपि दृश्यन्ते ॥ २ ॥
भविष्यति गम्यादयः ॥ ३ ॥

---

१ प. पुस्तके इतः परमधिकम् । भियः क्रुकनपि वक्तव्यः । २ प. पुस्तके इतः परमधिकम् । वचिप्रच्छ्योरसंप्रसारणं च । ३ प. पुस्तके इतः परमधिकम् । जुहोतेर्दीर्घश्च । दृणातेर्ह्रस्वश्च द्वे च क्विच्चेति वक्तव्यम् । ४ प. पुस्तके इतः परमधिकम् । डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानं धातुविधितुक्प्रतिषेधार्थम् । बाहुलकं प्रकृतेस्तनुदृष्टेः । प्रायसमुच्चयनादपि तेषाम् । कार्यसशेषविधेश्च तदुक्तम् । नैगमरूढिभवं हि सुसाधु । नाम च धातुजमाह निरुक्ते । व्याकरणे शकटस्य तोकम् । यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ।

१ भविष्यतीत्यनद्यतन उपसंख्यानम् ।

२ [1]इतरेतराश्रयं च ।

३ [2]उक्तं वा

**यावत्पुरानिपातयोर्लट् ॥ ४ ॥**

१ यावत्पुरादिषु लड्विधिर्लुटः पूर्वविप्रतिषिद्धम् ।

**विभाषा कदाकर्ह्योः ॥ ५ ॥**

**किंवृत्ते लिप्सायाम् ॥ ६ ॥**

**लिप्स्यमानसिद्धौ च ॥ ७ ॥**

**लोडर्थलक्षणे च ॥ ८ ॥**

**लिङ् चोर्ध्वमौहूर्तिके ॥ ९ ॥**

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।१०।**

१ ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं तृजादिप्रतिषेधार्थम् ।

**भाववचनाश्च ॥ ११ ॥**

१ भाववचनानां यथाविहितानां प्रतिपदविध्यर्थम् ।

**अण् कर्मणि च॥ १२ ॥**

१ अणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम्

**लृट् शेषे च ॥ १३ ॥**

१ लृटि शेषवचनं क्रियायां प्रतिपदविध्यर्थम् ।

२ अविशेषेण विधाने लृटोऽभावः प्रतिषिद्धत्वात् ।

**लृटः सद्वा ॥ १४ ॥**

१ सद्विधिर्नित्यमप्रथमासमानाधिकरणे ।

**अनद्यतने लुट् ॥ १५ ॥**

१ परिदेवने श्वस्तनी भविष्यन्त्यर्थे ।

२ कालप्रकर्षात्तूपमानम् ।

**पदरुजविशस्पृशो घञ् ॥ १६ ॥**

१ स्पृश उपतापे ।

**सृ स्थिरे[3] ॥ १७ ॥**

**भावे ॥ १८ ॥**

१ भावे सर्वलिङ्गो निर्देशः ।

**अकर्तरि च कारके संज्ञायाम् ॥ १९ ॥**

१ कारकग्रहणमनादेशे स्वार्थविज्ञानात् ।

२ संज्ञाग्रहणानर्थक्यं सर्वत्र घञो दर्शनात् ।

३ अतिप्रसङ्ग इति चेदभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम्[4] ।

**परिमाणाख्यायां सर्वेभ्यः ॥ २० ॥**

१ सर्वग्रहणमनर्थकं परिमाणाख्यायामिति सिद्धत्वात् ।

२ घञनुक्रमणमजब्विषये ।

३ अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम् ।

४ दारजारौ कर्तरि णिलुक् च ।

५ करणे वा ।

**इङश्च ॥ २१ ॥**

१ इङश्चेत्यपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् ।

२ शॄ वायुवर्णनिवृतेषु ।

**उपसर्गे रुवः ॥ २२ ॥**

१ प. पुस्तके इतः परमधिकम् । न वा तद्विधानस्यान्यत्राभावात् । भविष्यदधिकारस्य प्रयोजनं यावत् पचति पुरा पचतीत्यनपशब्दत्वाय । २ प. पुस्तके नास्ति । ३ प. पुस्तके इतः परमधिकम् । व्याधिमत्स्यबलेष्विति वाच्यम् । ४ प. पुस्तके सिद्धमिति नास्ति ।

सामि युद्रुदुवः ॥ २३ ॥

श्रिणीभुवो ऽनुपसर्गे ॥ २४ ॥

वौ क्षुश्रुवः ॥ २५ ॥

अवोदोर्नियः ॥ २६ ॥

प्रे द्रुस्तुस्रुवः ॥ २७ ॥

निरभ्योः पूल्वोः ॥ २८ ॥

उन्न्योर्ग्रः ॥ २९ ॥

कृ धान्ये ॥ ३० ॥

यज्ञे सामि स्तुवः ॥ ३१ ॥

प्रे स्त्रो ऽयज्ञे ॥ ३२ ॥

प्रथने वावशब्दे ॥ ३३ ॥

छन्दोनाम्नि च ॥ ३४ ॥

उदि ग्रहः ॥ ३५ ॥

समि मुष्टौ ॥ ३६ ॥

१ समि मुष्टावित्यनर्थकं वचनं[1] परिमाणाख्यायामिति सिद्धत्वात् ।

२ अपरिमाणार्थं तु ।

३ उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोः ।

परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥ ३७ ॥

परावनुपात्यय इणः ॥ ३८ ॥

व्युपयोः शेतेः पर्याये ॥ ३९ ॥

हस्तादाने चेरस्तेये ॥ ४० ॥

निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥ ४१ ॥

संघे चानौत्तराधर्ये ॥ ४२ ॥

कर्मव्यतिहारे णच् स्त्रियाम् ॥ ४३ ॥

१ कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम् ।

२ पृथग्ग्रहणं बाधकबाधनार्थम् ।

३ व्यावचोरीव्यावचर्च्यर्थम् ।

४ तत्र व्यतीक्षादिषु दोषः ।

५ सिद्धं तु प्रकृते स्त्रीग्रहणे णञ्ग्रहणं णिञ्ग्रहणं च ।

अभिविधौ भाव इनुण् ॥ ४४ ॥

१ अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम् ।

२ पृथग्ग्रहणं बाधकबाधनार्थम् ।

३ न तु ल्यटः ।

आक्रोशे ऽवन्योर्ग्रहः ॥ ४५ ॥

प्रे लिप्सायाम् ॥ ४६ ॥

परौ यज्ञे ॥ ४७ ॥

नौ वृ धान्ये ॥ ४८ ॥

उदि श्रयतियौतिपूद्रुवः ॥ ४९ ॥

विभाषाङि रुप्लुवोः ॥ ५० ॥

अवे ग्रहो वर्षप्रतिबन्धे ॥ ५१ ॥

प्रे वणिजाम् ॥ ५२ ॥

रश्मौ च ॥ ५३ ॥

वृणोतेराच्छादने ॥ ५४ ॥

परौ भुवो ऽवज्ञाने ॥ ५५ ॥

एरच् ॥ ५६ ॥

१ अज्विधौ भयस्योपसंख्यानम्[2] ।

२ नपुंसके क्तादिनिवृत्त्यर्थम् ।

३ कल्पादिभ्यश्च[3] प्रतिषेधः ।

४ जवसवौ छन्दसि ।

१ प. पुस्तके वचनमिति नास्ति । २ प. पुस्तके भयादीनामित्यधिकम् । ३ प. पुस्तके 'च' नास्ति ।

ऋदोरप् ॥ ५७ ॥

ग्रहवृदृनिश्चिगमश्च ॥ ५८ ॥

१ अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात् ।

२ अस्तेयार्थमिति चेन्नानिष्टत्वात् ।

३ वशिरण्योश्चोपसंख्यानम् ।

४ घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ।

उपसर्गे ऽदः ॥ ५९ ॥

णौ ण च ॥ ६० ॥

व्यधजपोरनुपसर्गे ॥ ६१ ॥

स्वनहसोर्वा ॥ ६२ ॥

यमः समुपनिविषु च ॥ ६३ ॥

नौ गदनदपठस्वनः ॥ ६४ ॥

क्वणो वीणायां च ॥ ६५ ॥

नित्यं पणः परिमाणे ॥ ६६ ॥

मदो ऽनुपसर्गे ॥ ६७ ॥

प्रमदसंमदौ हर्षे ॥ ६८ ॥

समुदोरजः पशुषु ॥ ६९ ॥

अक्षेषु ग्लहः ॥ ७० ॥

प्रजने सर्तेः ॥ ७१ ॥

ह्वः संप्रसारणं च न्यभ्युपविषु ॥ ७२ ॥

आङि युद्धे ॥ ७३ ॥

निपानमाहावः ॥ ७४ ॥

भावे ऽनुपसर्गस्य ॥ ७५ ॥

हनश्च वधः ॥ ७६ ॥

मूर्तौ घनः ॥ ७७ ॥

अन्तर्घनो देशे ॥ ७८ ॥

अगारैकदेशे प्रघणः प्रघाणश्च ॥ ७९ ॥

उद्घनो ऽत्याधानम् ॥ ८० ॥

अपघनो ऽङ्गम् ॥ ८१ ॥

करणे ऽयोविद्रुषु ॥ ८२ ॥

स्तम्बे क च ॥ ८३ ॥

परौ घः ॥ ८४ ॥

उपघ्न आश्रये ॥ ८५ ॥

संघोद्घौ गणप्रशंसयो ॥ ८६ ॥

निघो निमितम् ॥ ८७ ॥

ड्वितः क्त्रिः ॥ ८८ ॥

ट्वितो ऽथुच् ॥ ८९ ॥

यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ९० ॥

१ यजादिभ्यो नस्य ङित्वे संप्रसारणप्रतिषेधः ।

२ अङिति गुणप्रतिषेधः ।

स्वपो नन् ॥ ९१ ॥

उपसर्गे घोः किः ॥ ९२ ॥

कर्मण्यधिकरणे च ॥ ९३ ॥

स्त्रियां क्तिन् ॥ ९४ ॥

१ स्त्रियां क्तिनाबादिभ्यश्च[१] ।

२ निष्ठायां वा सेटोऽकारवचनात् सिद्धम्[२] ।

स्थागापापचो भावे ॥ ९५ ॥

१ स्थादिभ्यः सर्वापवादप्रसङ्गः ।

२ सिद्धं त्वङ्विधाने स्थादिप्रतिषेधात् ।

३ श्रुयजिषिस्तुभ्यः करणे ।

४ ग्लाज्याहाभ्यो निः ।

मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ॥ ९६ ॥

१ प. पुस्तके चेति पदं नास्ति । २ प. पुस्तके सिद्धमिति नास्ति ।

ऊतियूतिजूतिसातिहेतिकीर्तयश्च ॥९७॥

व्रजयजोर्भावे क्यप् ॥ ९८ ॥

१ क्यब्विधिरधिकरणे च ।

संज्ञायां समजनिषदनिपतमनविदसुञ्शीङ्भृञिणः ॥ ९९ ॥

कृञः श च ॥ १०० ॥

१ कृञः श चेति वावचनं क्तिनर्थम् ।

इच्छा[1] ॥ १०१ ॥

अ प्रत्ययात् ॥१०२ ॥

गुरोश्च हलः ॥ १०३ ॥

षिद्भिदादिभ्यो ऽङ् ॥ १०४ ॥

१ भिदा विदारणे ।

२ छिदा द्वैधीकरणे ।

३ आरा शस्त्र्याम् ।

४ धारा प्रपाते ।

५ गुहा गिर्योषध्योः ।

चिन्तिपूजिकथिकुम्बिचर्चश्च ॥ १०५ ॥

आतश्चोपसर्गे ॥ १०६ ॥

ण्यासश्रन्थो युच् ॥ १०७ ॥

१ युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानम् ।

२ इषेरनिच्छार्थस्य ।

३ परेर्वा ।

रोगाख्यायां ण्वुल् बहुलम् ॥ १०८ ॥

१ धात्वर्थनिर्देशे ण्वुल् ।

२ इक्श्तिपौ धातुनिर्देशे ।

३ वर्णात्कारः ।

४ रादिफः ।

५ मत्वर्थाच्छः ।

६ इणजादिभ्यः ।

७ इञ्वपादिभ्यः ।

८ इक्कृष्यादिभ्यः ।

९ संपदादिभ्यः क्विप् ।

संज्ञायाम् ॥ १०९ ॥

विभाषाख्यानपरिप्रश्नयोरिञ्च ॥११०॥

पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ १११ ॥

आक्रोशे नञ्यनिः ॥ ११२ ॥

कृत्यल्युटो बहुलम्[2] ॥ ११३ ॥

नपुंसके भावे क्तः ॥ ११४ ॥

ल्युट् च ॥ ११५ ॥

कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ॥ ११६ ॥

करणाधिकरणयोश्च ॥ ११७ ॥

पुंसि संज्ञायां घः प्रायेण ॥ ११८ ॥

गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ११९ ॥

१ गोचरादीनामग्रहणं प्रायवचनाद्यथा कषो निकष इति ।

अवे तृस्त्रोर्घञ् ॥ १२० ॥

हलश्च ॥ १२१ ॥

१ घञ्विधाववहाराधारावायानामुपसंख्यानम् ।

अध्यायन्यायोद्यावसंहाराश्च ॥ १२२ ॥

उदङ्को ऽनुदके ॥ १२३ ॥

१ प पुस्तके इतः परमधिकम् । इच्छापरिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम् । जागर्तेरकारो वा । २ प. पुस्तके इतः परमधिकम् । कृतो बहुलमिति वक्तव्यं पादहारकाद्यर्थम् ।

१ उदङ्कोऽनुदकग्रहणानर्थक्यं च प्रायवचनाद्यथा गोदोहनः प्रसाधन इति ।

**जालमानायः ॥ १२४ ॥**

**खनो घ च[2] ॥ १२५ ॥**

**ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥१२६॥**

१ अजब्भ्यां स्त्रीखलनाः ।

२ स्त्रियाः खलनौ विप्रतिषेधेन ।

**कर्तृकर्मणोश्च भूकृञोः[3] ॥ १२७ ॥**

१ खल्कर्तृकर्मणोश्च्व्यर्थयोः ।

२ कर्तृकर्मग्रहणं चोपपदसंज्ञार्थम् ।

**आतो युच् ॥ १२८ ॥**

**छन्दसि गत्यर्थेभ्यः ॥ १२९ ॥**

**अन्येभ्योऽपि दृश्यते ॥ १३० ॥**

१ भाषायां शासियुधिदृशिधृषिभ्यो युच्[4] ।

**वर्तमानसामीप्ये वर्तमानवद्वा ॥१३१॥**

१ वर्तमानसामीप्ये वर्तमानवद्वचनं शत्राद्यर्थम् ।

**आशंसायां भूतवच्च ॥ १३२ ॥**

१ आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः ।

२ न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम् ।

३ आशंसासंभावनयोरविशेषात्तद्विधानस्याप्राप्तिः ।

४ न वा संभावनावयवत्वादाशंसायाः ।

५ अर्थासंदेहो वालमर्थत्वात्संभावनस्य ।

**क्षिप्रवचने लृट् ॥ १३३ ॥**

१ क्षिप्रवचने लृट आशंसावचने लिङ्प्रतिषेधेन ।

२ अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात् ।

३ सिद्धं तु भाविष्यत्प्रतिषेधात् ।

४ हेतुभूतकालसंप्रेक्षितत्वाद्वा ।

५ अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तुर्विद्यमानत्वात् ।

६ सिद्धं तु यथास्वं कालसमुच्चारणात् ।

७ अवात्वात् ।

८ असिद्धविपर्यासश्च ।

**आशंसावचने लिङ् ॥ १३४ ॥**

**नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ॥ १३५ ॥**

१ नानद्यतनवत्प्रतिषेधे लङ्लुटोः प्रतिषेधः ।

२ अद्यतनवद्वचने हि विधानम् ।

३ तत्र लङ्विधिप्रसङ्गः ।

४ लुङ्लटोश्चायथाकालम् ।

**भविष्यति मर्यादावचनेऽवरस्मिन् ॥ १३६ ॥**

१ भविष्यति मर्यादावचनेऽवरस्मिन्नित्यक्रियाप्रबन्धार्थम् ।

२ क्रियाप्रबन्धार्थमिति चेद्वचनानर्थक्यम् ।

३ अहोरात्रप्रतिषेधार्थमिति चेन्नानिष्टत्वात् ।

**कालविभागे चानहोरात्राणाम् ॥ १३७॥**

१ प. पुस्तके वचनानर्थक्यमिति पाठः । २ प. पुस्तके इतः परमधिकम् । खनो डडरेकवकाः । ३ प. पुस्तके चोपपदार्थमिति । ४ प. पुस्तके इतः परमधिकम् । मृषेश्चेति वक्तव्यम् ।

१ अनहोरात्राणामिति तद्विभागे प्रतिषेधः ।
२ तैश्च विभागे ।

**परस्मिन्विभाषा ॥ १३८ ॥**

**लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ १३९ ॥**

**भूते च ॥ १४० ॥**

१ भूते लृङुताप्यादिषु ।

**वोताप्योः ॥ १४१ ॥**

१ विभाषा गर्हाप्रभृतौ प्रागुतापिभ्याम् ।

**गर्हायां लडपिजात्वोः ॥ १४२ ॥**

१ गर्हायां लड्विधानानर्थक्यं क्रियासमाप्तिविवक्षितत्वात् ।

**विभाषा कथमि लिङ् च ॥ १४३ ॥**

**किंवृत्ते लिङ्लृटौ ॥ १४४ ॥**

**अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥ १४५ ॥**

१ किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यम् ।

**किंकिलास्त्यर्थेषु लृट् ॥ १४६ ॥**

**जातुयदोर्लिङ् ॥ १४७ ॥**

१ जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानम् ।

**यच्चयत्रयोः ॥ १४८ ॥**

**गर्हायां च ॥ १४९ ॥**

**चित्रीकरणे च ॥ १५० ॥**

**शेषे लृडयदौ ॥ १५१ ॥**

१ चित्रीकरणे यदि प्रतिषेधानर्थक्यमर्थान्यत्वात् ।

**उताप्योः समर्थयोर्लिङ् ॥ १५२ ॥**

**कामप्रवेदनेऽकच्चिति ॥ १५३ ॥**

**संभावनेऽलमिति चेत्सिद्धाप्रयोगे ॥ १५४ ॥**

**विभाषा धातौ संभावनवचनेऽयदि ॥ १५५ ॥**

**हेतुहेतुमतोर्लिङ् ॥ १५६ ॥**

१ हेतुहेतुमतोर्लिङ्[1] ।
२ भविष्यदधिकारे ।

**इच्छार्थेषु लिङ्लोटौ ॥ १५७ ॥**

१ कामप्रवेदनं चेत् ।

**समानकर्तृकेषु तुमुन् ॥ १५८ ॥**

**लिङ् च ॥ १५९ ॥**

**इच्छार्थेभ्यो विभाषा वर्तमाने ॥ १६० ॥**

**विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ १६१ ॥**

१ निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वात् ।
२ द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वात् ।
३ सिद्धं तु द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात् ।

**लोट् च ॥ १६२ ॥**

**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ १६३ ॥**

१ प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टम् ।
२ विध्यर्थं तु स्त्रियाः प्रागिति वचनात् ।

**लिङ् चोर्ध्वमौहूर्तिके ॥ १६४ ॥**

**स्मे लोट् ॥ १६५ ॥**

**अधीष्टे च ॥ १६६ ॥**

**कालसमयवेलासु तुमुन् ॥ १६७ ॥**

[1] प. पुस्तके इतः परमधिकम् । प्रथमान्तेष्विति वक्तव्यम् ।

लिङ् यदि ॥ १६८ ॥
अर्हे कृत्यतृचश्च ॥ १६९ ॥
आवश्यकाधमर्ण्ययोर्णिनिः ॥ १७० ॥
कृत्याश्च ॥ १७१ ॥
शकि लिङ् च ॥ १७२ ॥
आशिषि लिङ्लोटौ ॥ १७३ ॥
क्तिच्क्तौ च संज्ञायाम् ॥ १७४ ॥
माङि लुङ् ॥ १७५ ॥
स्मोत्तरे लङ् च ॥ १७६ ॥

इति तृतीयाध्यायस्य तृतीयः पादः ।

---

धातुसंबन्धे प्रत्ययाः ॥ १ ॥
१ धातुसंबन्धे प्रत्ययस्य यथाकालविधानासिद्धम् ।
२ उपपदस्य कालान्यत्वम् ।
क्रियासमभिहारे लोट्लोटो हिस्वौ वा च तध्वमोः ॥ २ ॥
१ हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थम् ।
२ समसंख्यार्थं च ।
३ न वा तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य ।
४ तत्र पदादेशे पित्त्वाटोः प्रतिषेधः ।
५ सिद्धं तु लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनात् ।
६ योगविभागात्सिद्धम् ।
समुच्चये ऽन्यतरस्याम् ॥ ३ ॥
यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ४ ॥
समुच्चये सामान्यवचनस्य ॥ ५ ॥
छन्दसि लुङ्लङ्लिटः ॥ ६ ॥
लिङर्थे लेट् ॥ ७ ॥
उपसंवादाशङ्कयोश्च ॥ ८ ॥
१ उपसंवादाशङ्कयोर्वचनानर्थक्यं लिङर्थत्वात् ।
तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥ ९ ॥
प्रयै रोहिष्यै अव्यथिष्यै ॥ १० ॥
दृशे विख्ये च ॥ ११ ॥
शकि णमुल्कमुलौ ॥ १२ ॥
ईश्वरे तोसुन्कसुनौ ॥ १३ ॥
कृत्यार्थे तवैकेन्केन्यत्वनः ॥ १४ ॥
अवचक्षे च ॥ १५ ॥
भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ १६ ॥
सृपितृदोः कसुन् ॥ १७ ॥
अलंखल्वोः प्रतिषेधयोः प्राच्यां क्त्वा ॥ १८ ॥
उदीचां माङो व्यतीहारे ॥ १९ ॥
परावरयोगे च ॥ २० ॥
समानकर्तृकयोः पूर्वकाले[1] ॥ २१ ॥
१ समानकर्तृकयेरिति बहुष्वप्राप्तिः ।
२ सिद्धं तु क्रियाप्रधानत्वात् ।
३ लोकविज्ञानान्न सिध्यति ।
४ अनन्त्यवचनात्तु सिद्धम् ।

---

१ प. पुस्तके इतः परमधिकम् । द्विवचननिर्देशात् ।

५ व्यादाय स्वपितीत्युपसंख्यानमपूर्वकालत्वात् ।

६ न वा स्वप्नस्यावरकालत्वात् ।

आभीक्ष्ण्ये णमुल् च ॥ २२ ॥

न यद्यनाकाङ्क्षे ॥ २३ ॥

विभाषाग्रेप्रथमपूर्वेषु ॥ २४ ॥

१ अग्रादिष्वप्राप्तविधेः समासप्रतिषेधः ।

कर्मण्याक्रोशे कृञः खमुञ् ॥ २५ ॥

स्वादुमि णमुल् ॥ २६ ॥

१ स्वादुमि मान्तनिपातनमीकाराभावार्थम् ।

२ च्व्यन्तस्य मकारान्तार्थम् ।

३ आ च तुमनः समानाधिकरणे ।

अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ २७ ॥

यथातथयोरसूयाप्रतिवचने ॥ २८ ॥

कर्मणि दृशिविदोः साकल्ये ॥ २९ ॥

यावति विन्दजीवोः ॥ ३० ॥

चर्मोदरयोः पूरेः ॥ ३१ ॥

वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३२ ॥

चेले क्नोपेः ॥ ३३ ॥

निमूलसमूलयोः कषः ॥ ३४ ॥

शुष्कचूर्णरूक्षेषु पिषः ॥ ३५ ॥

समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥ ३६ ॥

करणे हनः ॥ ३७ ॥

१ हनः करणेऽनर्थकं वचनं हिंसार्थेभ्यो णमुल्विधानात् ।

२ अर्थवत्त्वहिंसार्थस्य विधानात् ।

३ नित्यसमासार्थं च ।

स्नेहने पिषः ॥ ३८

हस्ते वर्तिग्रहोः ॥ ३९ ॥

स्वे पुषः ॥ ४० ॥

अधिकरणे बन्धः ॥ ४१ ॥

संज्ञायाम् ॥ ४२ ॥

कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ४३ ॥

ऊर्ध्वे शुषिपूरोः ॥ ४४ ॥

उपमाने कर्मणि च ॥ ४५ ॥

कषादिषु यथाविध्यनुप्रयोगः ॥ ४६ ॥

उपदंशस्तृतीयायाम् ॥ ४७ ॥

हिंसार्थानां च समानकर्मकाणाम् ॥४८॥

सप्तम्यां चोपपीडरुधकर्षः ॥ ४९ ॥

समासत्तौ ॥ ५० ॥

प्रमाणे च ॥ ५१ ॥

अपादाने परीप्सायाम् ॥ ५२ ॥

द्वितीयायां च ॥ ५३ ॥

स्वाङ्गेऽध्रुवे ॥ ५४ ॥

परिक्लिश्यमाने च ॥ ५५ ॥

विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ५६ ॥

अस्यतितृषोः क्रियान्तरे कालेषु ॥ ५७ ॥

नाम्न्यादिशिग्रहोः ॥ ५८ ॥

अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥ ५९ ॥

तिर्यच्यपवर्गे ॥ ६० ॥

स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ ६१ ॥

नाधार्थप्रत्यये च्व्यर्थे ॥ ६२ ॥

तूष्णीमि भुवः ॥ ६३ ॥

अन्वच्यानुलोम्ये ॥ ६४ ॥

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ॥ ६५ ॥

पर्याप्तिवचनेष्वलमर्थेषु ॥ ६६ ॥

कर्तरि कृत् ॥ ६७ ॥

१ कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात् ।

२ तत्र ल्युनादिप्रतिषेधो नानावाक्यत्वात् ।

३ तद्वच्च कृत्येष्वेवकारकरणम् ।

४ तच्च भव्याद्यर्थम् ।

५ ऋषिदेवततयोः कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्य ।

६ एवकारकरणं चार्थे ।

७ तच्च भव्याद्यर्थम् ।

८ तत्र प्रत्ययनियमेऽनिष्टप्रसङ्गः ।

९ संज्ञानियमे सिद्धम् ।

१० विभक्त्यादिषु चाप्राप्तिः प्रकृतेः प्रत्ययपरवचनात् ।

भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥ ६८ ॥

लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ६९ ॥

१ लग्रहणं सकर्मकनिवृत्त्यर्थम् ।

तयोरेव कृत्यक्तखलर्थाः ॥ ७० ॥

आदिकर्मणि क्तः कर्तरि च ॥ ७१ ॥

गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ॥ ७२ ॥

दाशगोघ्नौ संप्रदाने ॥ ७३ ॥

भीमादयोऽपादाने ॥ ७४ ॥

ताभ्यामन्यत्रोणादयः ॥ ७५ ॥

क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥ ७६ ॥

लस्य ॥ ७७ ॥

१ लादेशे सर्वप्रसङ्गोऽविशेषात्[3] ।

२ अर्थवद्ग्रहणात्सिद्धमिति चेन्न वर्णग्रहणेषु ।

३ तस्माद्विशिष्टग्रहणम् ।

४ लादेशो वर्णविधेः पूर्वविप्रतिषिद्धम् ।

५ [4]उक्तं वा ।

तिप् तस् झि सिप् थस् थ मिब्वस् मस् तातां झ थासाथां ध्वमिड्वहि महिङ् ॥ ७८ ॥

टित आत्मनेपदानां टेरे ॥ ७९ ॥

१ टित एत्व आत्मनेपदेष्वान प्रतिषेधः ।

२ [5]उक्तं वा ।

थासः से ॥ ८० ॥

लिटस्तझयोरेशिरेच् ॥ ८१ ॥

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ८२ ॥

१ णलः शित्करणं सर्वादेशार्थम् ।

२ [6]उक्तं वा ।

३ अकारस्य शित्करणं सर्वादेशार्थम् ।

४ अकारवचनं समसंख्यार्थम् ।

५ तस्माच्छित्करणम् ।

विदो लटो वा ॥ ८३ ॥

ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ८४ ॥

---

१ प. पुस्तके इतः परमधिकम् । कृद्भिरित्यस्य स्थाने कर्तरीति पदम् । २ प. पुस्तके इतः परमधिकम् । विप्रतिषेधाद्वानः कर्तरि । सर्वप्रसङ्गस्तु । सर्वत्राप्रसङ्गस्तु । सर्वप्रसङ्गस्तु । ३ प. पुस्तके इतः परमधिकम् अर्थवद्ग्रहणात्सिद्धम् । ४-६ प. पुस्तके नास्ति ।

**लोटो लङ्वत् ॥ ८५ ॥**
१ लङ्वदतिदेशे जुस्भावप्रतिषेधः ।
२ उत्ववचनात्सिद्धम् ।
**एरुः ॥ ८६ ॥**
**सेर्ह्यपिच्च ॥ ८७ ॥**
**वा छन्दसि ॥ ८८ ॥**
**मेर्निः ॥ ८९ ॥**
१ हिन्योरुत्वप्रतिषेधः ।
२ न वोच्चारणसामर्थ्यात् ।
**आमेतः ॥ ९० ॥**
**सवाभ्यां वामौ ॥ ९१ ॥**
**आडुत्तमस्य पिच्च ॥ ९२ ॥**
**एत ऐ ॥ ९३ ॥**
१ एत ऐत्व आड्गुणप्रतिषेधः ।
२ न वा बहिरङ्गलक्षणत्वात् ।
**लेटो ऽडाटौ ॥ ९४ ॥**
**आत ऐ ॥ ९५ ॥**
**वैतो ऽन्यत्र ॥ ९६ ॥**
**इतश्च लोपः परस्मैपदेषु ॥ ९७ ॥**
**स उत्तमस्य ॥ ९८ ॥**
**नित्यं ङितः ॥ ९९ ॥**
**इतश्च ॥ १०० ॥**
**तस्थस्थमिपां तांतंतामः ॥ १०१ ॥**
**लिङः सीयुट् ॥ १०२ ॥**
१ यासुडादेः सीयुट्प्रतिषेधः ।
२ न वा वाक्यापकर्षात् ।
३ सुट्तिथोस्त्वपकर्षविज्ञानात् ।
४ अनादेश्च सुड्वचनम् ।
५ न वा तिथोः प्रधानभावात्तद्विशेषणं लिङ्ग्रहणम् ।

**यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ १०३ ॥**
१ यासुटो ङिद्वचनं पिदर्थम् ।
२ उदात्तवचनं च ।
३ आगमानुदात्तार्थं वा ।
**किदाशिषि ॥ १०४ ॥**
**झस्य रन् ॥ १०५ ॥**
**इटो ऽत् ॥ १०६ ॥**
**सुट् तिथोः ॥ १०७ ॥**
**झेर्जुस् ॥ १०८ ॥**
**सिजभ्यस्तविदिभ्यश्च ॥ १०९ ॥**
**आतः ॥ ११० ॥**
१ जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहणम् ।
२ प्रापकमिति चेत्प्रत्ययलक्षणप्रतिषेधः ।
३ एवकारकरणं च ।
४ लङ्ग्रहणं च ।
**लङः शाकटायनस्यैव ॥ १११ ॥**
**द्विषश्च ॥ ११२ ॥**
**तिङ्शित्सार्वधातुकम् ॥ ११३ ॥**
**आर्धधातुकं शेषः ॥ ११४ ॥**
१ आर्धधातुकसंज्ञायां धातुग्रहणम् ।
२ स्वादिप्रतिषेधः ।
३ तद्विधानात्सिद्धम् ।
**लिट् च ॥ ११५ ॥**
**लिङाशिषि ॥ ११६ ॥**
**छन्दस्युभयथा ॥ ११७ ॥**

॥ इति तृतीयाध्यायस्य चतुर्थः पादः ॥

## चतुर्थोऽध्यायः ।

**ङ्याप्प्रातिपदिकात् ॥ १ ॥**

१ ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम् ।
२ यच्छयोश्च लुगर्थम् ।
३ वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्संप्रत्ययार्थम् ।
४ ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् ।
५ प्रयोजनं सर्वनामस्वरसमासतद्धितविधिलुगलुगर्थम् ।
६ मानिनि च विधिप्रतिषेधार्थम् ।
७ प्रत्ययग्रहणोपचारेषु च ।
८ अतिप्रसङ्ग उपपदविधौ ।
९ यञिञोः फकि ।
१० समासान्तेषु च ।
११ महदात्त्वे प्रियादिषु ।
१२ ञ्नित्स्वरे ।
१३ राज्ञः स्वरे ब्राह्मणकुमारयोः ।
१४ समाससंघातग्रहणेषु च ।
१५ विभक्तौ चोक्तम् ।
१६ तद्धितविधानार्थं तु ।
१७ विप्रतिषेधाद्धि तद्धितबलीयस्त्वम् ।
१८ तत्र समासान्तेषु दोषः ।
१९ त्यूङोश्च ग्रहणम् ।
२० तदन्तस्य च प्रत्ययार्थेनायोगात्तद्धितानुत्पत्तिः ।
२१ [२]उक्तं वा ।

**स्वौ जसमौट्छष्टा भ्याम् भिस् ङे भ्याम् भ्यस् ङसि भ्याम् भ्यस् ङसोसाम् ङ्योस् सुप् ॥ २ ॥**

**स्त्रियाम्[३] ॥ ३ ॥**

१ स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः[४] ।
२ स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात्स्त्रियामिति लिङ्गानुपपत्तिः ।
३ स्त्रीसमानाधिकरणादिति चेद्भूतादिष्वतिप्रसङ्गः ।
४ षट्संज्ञकेभ्यश्च प्रतिषेधः ।
५ सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादयः ।
६ गुणवचनस्य चाश्रयतो लिङ्गवचनभावात् ।
७ भावस्य च भावयुक्तत्वात् ।
८ स्त्रीविषये ङ्यापोरप्रसिद्धिरकारान्तादर्शनात् ।
९ सर्वेषां तु स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः ।
१० तस्मात्सिद्धम् ।

१–२ प. पुस्तके नास्ति । ३ प. पुस्तके इतः परमधिकम् । लिङ्गात्स्त्रीपुंसयोर्ज्ञाने भ्रुकुंसे टाप्प्रसज्यते । नत्वं खरकुटीः पश्य । खट्वावृक्षौ न सिध्यतः । नपुंसकं भवेत्तस्मिन् । तदभावे नपुंसकम् । असत्तु मृगतृष्णावद् । गंधर्वनगरं यथा । आदित्यगतिवत्सन्न । वस्त्रान्तर्हितवच्च तत् । तयोस्तु तत्कृतं दृष्ट्वा । यथाकाशेन ज्योतिषः । अन्योन्यसंश्रयं त्वेतत् । प्रत्यक्षेण विरुध्यते । तटे च सर्वलिङ्गानि दृष्ट्वा कोऽध्यवसास्यति । संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः । संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान् । तस्योक्तौ लोकतो नाम गुणो वा लुपि युक्तवत् । ४ प. पुस्तके इतः परमधिकम् । एकत्वात्स्त्रीत्वस्य ।

**अजाद्यतष्टाप् ॥ ४ ॥**

१ शूद्रा चामहत्पूर्वा ।

२ जातिः ।

**ऋन्नेभ्यो ङीप् ॥ ५ ॥**

**उगितश्च ॥ ६ ॥**

१ धातोरुगितः प्रतिषेधः ।

२ अञ्चतेश्चोपसंख्यानम् ।

३ उगित्यञ्चतिग्रहणात्सिद्धमधातोः ।

**वनो र च ॥ ७ ॥**

१ वनो न हशः[1] ।

२ रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वात् ।

३ अनो बहुव्रीहिप्रतिषेधे वोपधालोपिनो वावचनम् ।

**पादो ऽन्यतरस्याम् ॥ ८ ॥**

**टाबृचि ॥ ९ ॥**

**न षट्स्वस्रादिभ्यः[2] ॥ १० ॥**

**मनः ॥ ११ ॥**

**अनो बहुव्रीहेः ॥ १२ ॥**

**डाबुभाभ्यामन्यतरस्याम् ॥ १३ ॥**

**अनुपसर्जनात् ॥ १४ ॥**

१ अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधात् ।

२ ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्य ।

३ पूर्वसूत्रनिर्देशो वापिशलमधीत इति ।

४ जातिशब्देभ्यस्त्वतिप्रसङ्गः ।

५ सिद्धं तु जातेरनुपसर्जनत्वात् ।

६ अनुपसर्जनाधिकारे जातेर्ङीष्विधाने सुपर्ण्या उपसंख्यानम् ।

७ न वा समासस्यानुपसर्जनत्वाज्जातिवाचकत्वाच्च शब्दस्य सामान्येन ङीष्विधानम् ।

**टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥ १५ ॥**

१ ढग्रहणे सानुबन्धकस्योपसंख्यानम् ।

२ अननुबन्धकग्रहणे हि न सानुबन्धकस्य ।

३ अञ्ग्रहणमनर्थकं तदन्ताद्धि ङीन्विधानम् ।

४ न वा जात्यधिकारात् ।

५ अनधिकारे हि पुंयोगादाख्यायां ङीन्प्रसङ्गः[3] ।

६ ख्युन उपसंख्यानम् ।

**यञश्च[4] ॥ १६ ॥**

**प्राचां ष्फ तद्धितः ॥ १७ ॥**

१ तद्धितवचनं षितः प्रातिपदिकादीकारार्थम् ।

**सर्वत्र लोहितादिकतन्तेभ्यः ॥ १८ ॥**

१ लोहितादिषु शाकल्यस्योपसंख्यानम्[5] ।

**कौरव्यमाण्डूकाभ्यां च ॥ १९ ॥**

१ कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम् ।

२ छश्च[6] ।

---

१ प. पुस्तके इतः परमधिकम् । बहुलं छन्दसि । २ प. पस्तके इतः परमधिकम् । षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् । प्रत्याहाराचापा सिद्धम् । दोषस्त्विवत्वे । तस्मान्नोभौ । ३ प. पुस्तके इतः परमधिकम् । नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् । ४ प. पुस्तके इतः परमधिकम् । अपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम् । ४ प. पुस्तके नास्ति । ५ प. पुस्तके इतः परमधिकम् । कण्वात्तु शकलः पूर्वः । कतादुत्तर इष्यते । पूर्वोत्तरौ तदन्तादी । ष्फाणौ तत्र प्रयोजनम् । ६ प. पुस्तके इतःपरमधिकम् । वयस्यचरम इति वक्तव्यम् ।

**वयसि प्रथमे ॥ २० ॥**

**द्विगोः ॥ २१ ॥**

**अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ २२ ॥**

**काण्डान्तात्क्षेत्रे ॥ २३ ॥**

**पुरुषात्प्रमाणेऽन्यतरस्याम् ॥ २४ ॥**

**बहुव्रीहेरूधसो ङीष् ॥ २५ ॥**

१ ऊधसो नकारो लिङ्गाधिकारे ।

२ न वा समासान्ताधिकारे स्त्रीग्रहणात्[1] ।

३ इतरथा हि कब्विधिप्रसङ्गः ।

**संख्याव्ययादेर्ङीप् ॥ २६ ॥**

**दामहायनान्ताच्च ॥ २७ ॥**

१ दामहायनान्तात्संख्यादेः ।

२ तत्पुरुषविज्ञानाद्वा सिद्धम्[2] ।

**अन उपधालोपिनोऽन्यतरस्याम् ॥ २८ ॥**

**नित्यं संज्ञाछन्दसोः ॥ २९ ॥**

**केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ३० ॥**

**रात्रेश्चाजसौ[3] ॥ ३१ ॥**

**अन्तर्वत्पतिवतोर्नुक् ॥ ३२ ॥**

१ अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे[4] ।

**पत्युर्नो यज्ञसंयोगे ॥ ३३ ॥**

**विभाषा सपूर्वस्य ॥ ३४ ॥**

१ पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानम् ।

२ सिद्धं तु पत्युः प्रातिपदिकविशेषणत्वात् ।

**नित्यं सपत्न्यादिषु ॥ ३५ ॥**

**पूतक्रतोरै च ॥ ३६ ॥**

१ पूतक्रत्वादीनां पुंयोगप्रकरणे वचनम् ।

२ लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतप्रसङ्गः ।

३ सिद्धं त्वागमादेशानामङ्गतः स्त्रीप्रकरणे वचनात् ।

४ लिङ्गलुकि वा प्रकृतिप्रत्ययापत्तिवचनम् ।

**वृषाकप्यग्निकुसितकुसीदानामुदात्तः ३७**

**मनोरौ वा ॥ ३८ ॥**

**वर्णादनुदात्तात् तोपधात् तो नः ॥ ३९ ॥**

१ असितपलितयोः प्रतिषेधः ।

२ छन्दसि क्नमेके ।

३ वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानम् ।

**अन्यतो ङीष् ॥ ४० ॥**

**षिद्गौरादिभ्यश्च ॥ ४१ ॥**

**जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥ ४२ ॥**

१ नीलादोषधौ ।

२ प्राणिनि च ।

३ वा संज्ञायाम् ।

**शोणात्प्राचाम् ॥ ४३ ॥**

**वोतो गुणवचनात् ॥ ४४ ॥**

१ गुणवचनान्ङीबाद्युदात्तार्थम् ।

---

१ प. पुस्तके समासान्ताधिकारे इत्यस्य स्थाने समासान्ते इति पाठः । २ प. पुस्तके इत:परमधिकम् । हायनो वयसि स्मृतः । ३ प. पुस्तके इतः परमधिकम् । अजसादिष्विति वक्तव्यम् । ४ प. पुस्तके इतः परमधिकम् । अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात् । गर्भिण्यां जीवपत्यां च । वा च छन्दसि नुग्भवेत् ।

२ खरुसंयोगोपधप्रतिषेधश्च ।

**बह्वादिभ्यश्च ॥ ४५ ॥**

**नित्यं छन्दसि ॥ ४६ ॥**

**भुवश्च ॥ ४७ ॥**

**पुंयोगादाख्यायाम्[1] ॥ ४८ ॥**

१ पुंयोगादाख्यायां तद्धितलुग्वचनम् ।

२ सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः ।

३ सिद्धं तु स्त्रियाः पुंशब्देनाभिधानात् ।

४ गतिकारकोपपदानां कृद्भिः सह समासवचनम् ।

५ प्रयोजनं क्तादल्पाख्यायाम् ।

६ जातेर्ङीष्विधानम् ।

७ समासान्तस्य णत्वे ।

८ कृदन्तात्तद्धिते वृद्धिस्वरौ च ।

९ अवदातायां तु ङीष्प्रसंगः[2] ।

**इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ४९ ॥**

१ हिमारण्ययोर्महत्त्वे ।

२ यवाद्दोषे ।

३ यवनाल्लिप्याम् ।

४ उपाध्यायमातुलाभ्यां वा ।

५ मुद्गलाच्छन्दसि लिच्च ।

६ आचार्यादणत्वं च ।

७ अर्यक्षत्रियाभ्यां वा ।

**क्रीतात्करणपूर्वात् ॥ ५० ॥**

**क्तादल्पाख्यायाम् ॥ ५१ ॥**

**बहुव्रीहेश्चान्तोदात्तात् ॥ ५२ ॥**

१ अन्तोदात्ते जातप्रतिषेधः ।

२ पाणिगृहीत्यादीनां विशेषे ।

३ बहुलं तणि ।

४ [4]प्रबद्धविलूनाद्यर्थम् ।

५ अन्तोदात्तादबहुनञ्सुकालसुखादिपूर्वात्

६ जातिपूर्वाद्वा ।

**अस्वाङ्गपूर्वपदाद्वा ॥ ५३ ॥**

**स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ५४ ॥**

१ उपसर्जनग्रहणमनर्थकं बहुव्रीह्यधिकारात् ।

२ बह्वजर्थमिति चेत्स्वाङ्गग्रहणात्सिद्धम् ।

३ अनन्तोदात्तार्थमिति चेत्सहादिकृतत्वात्सिद्धम् ।

४ स्वाङ्गसमुदायप्रतिषेधार्थं तु ।

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ ५५ ॥**

१ नासिकादीनां विभाषायां पुच्छाच्च[5] ।

२ कबरमणिविषशरेभ्यो नित्यम् ।

३ उपमानात्पक्षाच्च ।

४ नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन ।

**न क्रोडादिबह्वचः ॥ ५६ ॥**

**सहनञ्विद्यमानपूर्वाच्च ॥ ५७ ॥**

**नखमुखात्संज्ञायाम् ॥ ५८ ॥**

**दिर्घजिह्वी च च्छन्दसि ॥ ५९ ॥**

**दिक्पूर्वपदान्ङीप् ॥ ६० ॥**

१ दिक्पूर्वपदान्ङीषोऽनुदात्तत्वम् ।

---

१ प. पुस्तके इतःपरमधिकम् । गोपालिकादीनां प्रतिषेधः । २ प. पुस्तके ङीष्प्रतिषेधः इति पाठः ३ प. पुस्तके इतः परमधिकम् । सूर्याद्देवतायां चाब्वक्तव्यः । ४ प. पुस्तके प्रवृद्ध° इति पाठः । ५ प. पुस्तके पुच्छाच्चेत्यधिकम् ।

२ ङीब्विधाने ह्यन्यत्रापि ङीष्विषयान्ङी-
प्प्रसङ्गः ।

**वाहः ॥ ६१ ॥**

**सख्यशिश्वीति भाषायाम् ॥ ६२ ॥**

**जातेरस्त्रीविषयादयोपधात् ॥ ६३ ॥**

१ योपधप्रतिषेधे गवयहयमुकयमनुष्यम-
त्स्यानामप्रतिषेधः ।

**पाककर्णपर्णपुष्पफलमूलबालोत्तरप-
दाच्च ॥ ६४ ॥**

१ सदक्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रति-
षेधः ।

२ सभंस्त्राजिनशणपिण्डेभ्यः फलात् ।

३ त्रेश्च ।

४ मूलान्नञः ।

**इतो मनुष्यजातेः ॥ ६५ ॥**

१ इतो मनुष्यजातेरिञ उपसंख्यानम् ।

**ऊङुतः ॥ ६६ ॥**

१ ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम्

**बाह्वन्तात्संज्ञायाम् ॥ ६७ ॥**

**पङ्गोश्च ॥ ६८ ॥**

**ऊरूत्तरपदादौपम्ये ॥ ६९ ॥**

**संहितशफलक्षणवामादेश्च[1] ॥ ७० ॥**

**कद्रुकमण्डल्वोश्छन्दसि[3] ॥ ७१ ॥**

**संज्ञायाम् ॥ ७२ ॥**

**शार्ङ्गरवाद्यञो ङीन् ॥ ७३ ॥**

**यङश्चाप् ॥ ७४ ॥**

१ षाच्च यञश्चाप् ।

**आवट्याच्च ॥ ७५ ॥**

१ अन उपधालोपिन ऊधसो ङीष् पूर्व-
विप्रतिषिद्धम् ।

२ आवट्याद्यञः ष्फश्चापः ।

**तद्धिताः ॥ ७६ ॥**

**यूनस्तिः ॥ ७७ ॥**

**अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ्
गोत्रे[4] ॥ ७८ ॥**

१ ष्यङ्यनादेशे यलोपवचनम् ।

२ द्विरण्विधिः ।

३ आदेशे नलोपवचनम् ।

४ न वा ष्यङो लोपनिमित्तत्वात्[5] ।

---

१ प. पुस्तके इतः परमधिकम् । श्वेताच्च । २ प. पुस्तके इतः परमधिकम् । संहितसहाभ्यां चेति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । कद्रुकमण्डलुगुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् । ४ प. पुस्तके इतः परमधिकम् । प्रकर्षे चोत्तमं कृत्वा दाक्ष्या नोपोत्तमं गुरु । आम्विधिः केन ते न स्यात्प्रकर्षे यद्ययं तमः । उद्गतस्य प्रकर्षोऽयं गतशब्दोऽत्र लुप्यते । नाव्ययार्थप्रकर्षोऽस्ति धात्वर्थोऽत्र प्रकृष्यते । उद्गतोऽपेक्षते किंचित् त्रयाणां द्वौ किलोद्गतौ । चतुष्प्रभृति कर्तव्यो वाराह्यायां न सिध्यति । भिद्यतेऽस्य स्वरस्तेन विधिश्चामो न लक्ष्यते । शब्दान्तरामिदं विद्यादष्टमभ्यन्तरं त्रिषु । ५ प. पुस्तके इतः परमधिकम् । अनुबन्धौ त्वया कार्यौ । चाबर्थं टाब्विधिर्मम । उक्तेऽपि हि भवन्त्येते । तेन ञिन्न भविष्यति । अस्थानिवत्त्वे दोषस्ते वृद्धिरत्र न सिध्यति । त्वयाप्यत्र विशेषार्थं कर्तव्यं स्याद्विशेषणम् । पाश्यायां ते कथं न स्यात् । एको मे स्याद्विशेषणम् । अन्यस्मिन्सूत्रभेदः स्यात् । षिति लिङ्गं प्रसज्यते । ङिति चेक्रीयिते दोषः । व्यवधानान्न दुष्यति । योऽनन्तरो न धातुः सः । यो धातुः सोऽनन्तरः । न चेदुभयतः साम्यमुभयत्र प्रसज्यते । यङा विशेष्येत यदीह धातुर्यङ् धातुना वा यदि तुल्यमेतत् । उभौ प्रधानं यदि नात्र दोषः । तथा प्रसार्येत तु वाक्पतिस्ते । धातुप्रकरणस्येह न स्थानमिति निश्चयः । आत्त्वार्थं यदि कर्तव्यं तत्रैवैतत्करिष्यते । उपदेशे यदेजन्तं तस्य चेदात्त्वमिष्यते । उद्देशो रूढिशब्दानां तेन गोर्न भविष्यति ।

**गोत्रावयवात् ॥ ७९ ॥**

१ गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टम् ।

२ गोत्रादिति चेद्वचनानर्थक्यम् ।

३ अगुरूपोत्तमार्थमिति चेत्सर्वेषामवयवत्वात्सर्वप्रसङ्गः ।

४ सिद्धं तु रौढ्यादिषूपसंख्यानम् ।

**क्रौड्यादिभ्यश्च ॥ ८० ॥**

**दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्यो ऽन्यतरस्याम् ॥ ८१ ॥**

**समर्थानां प्रथमाद्वा ॥ ८२ ॥**

१ समर्थवचनमनर्थकं न ह्यसमर्थेनार्थाभिधानम् ।

२ प्रथमवचनमनर्थकं न ह्यप्रथमेनार्थाभिधानम् ।

३ [1]वावचने चोक्तम् ।

**प्राग्दीव्यतो ऽण् ॥ ८३ ॥**

१ प्राग्वचनं सकृद्विधानार्थम् ।

२ अधिकारात्सिद्धमिति चेदपवादविषयेऽण्प्रसङ्गः ।

३ तस्मात्प्राग्वचनम् ।

४ न वा क्वचिद्वावचनात् ।

**अश्वपत्यादिभ्यश्च ॥ ८४ ॥**

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।८५।**

१ वाग्मतिपितृमतां छन्दस्युपसंख्यानम् ।

२ पृथिव्या ञाञौ ।

३ देवस्य यञञौ ।

४ बहिषष्टिलोपो यञ्च ।

५ ईकक्च ।

६ ईकञ्छन्दसि ।

७ स्थाम्नोऽकारः ।

८ लोम्नोऽपत्येषु बहुषु ।

९ सर्वत्र गोरजादिप्रसङ्गे यत् ।

१० ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम् ।

**उत्सादिभ्यो ऽञ् ॥ ८६ ॥**

१ अञ्प्रकरणे ग्रीष्मादच्छन्दसि ।

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ८७ ॥**

१ नञ्स्नञौ भवनादिति[2] चेद्वत्यर्थे प्रतिषेधः ।

२ वतेः प्रागिति चेद्भाव उपसंख्यानम् ।

**द्विगोर्लुगनपत्ये ॥ ८८ ॥**

१ द्विगोर्लुकि तन्निमित्तग्रहणम् ।

२ अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि ।

**गोत्रे ऽलुगचि ॥ ८९ ॥**

१ [3]गोत्रेऽलुगचीति चेदितरेतराश्रयत्वादप्रसिद्धिः ।

२ विप्रतिषेधात्तु लुकश्छविधानम्[4] ।

३ गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ।

४ एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि ।

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतीति पदं नास्ति । ३ प. पुस्तके इदं नास्ति । ४ प. पुस्तके इतः परमधिकम् । भूम्नीति च लुक्प्राप्तो बाह्ये चार्थे विधीयतेऽजादिः । बहिरङ्गमन्तरङ्गाद्विप्रतिषेधाद्युक्तं स्यात् । भूम्नि प्राप्तस्य लुको यदजादौ तद्धितेऽलुकं शास्ति । एतद्ब्रवीति कुर्वन्समानकालावलुग्लुक्च ॥ यदि वा लुकः प्रसङ्गे भवत्यलुक् छस्तथा प्रसिद्धोऽस्य । लुग्वालुकः प्रसङ्गं प्रतीक्षते छेऽलुगस्य तथा ।

५ गर्गभार्गविकाग्रहणं वा नियमार्थम् ।

६ उक्तं[1] वा ।

**यूनि लुक् ॥ ९० ॥**

१ यूनि लुगचीति चेत्प्रत्ययस्यायथेष्ट-प्रसङ्गः ।

२ सिद्धं त्वविशेषेण लुग्वचनं हलि च प्रति-षेधः ।

३ प्रयोजनं सौवीरगोत्रेभ्यो णठक्छाः ।

४ इञ्ण्यौ सर्वत्र ।

५ प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदति-देशः[2] ।

**फक्फिञोरन्यतरस्याम् ॥ ९१ ॥**

**तस्यापत्यम्[3] ॥ ९२ ॥**

१ तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात् ।

२ सर्वनामनिर्देशे विशेषासंप्रत्ययः सामा-न्यनिर्देशात् ।

३ सामान्यचोदनास्तु विशेषेषु ।

४ अपत्याभिधाने स्त्रीपुंलिङ्गस्याप्रसिद्धिर्न-पुंसकत्वात् ।

५ सिद्धं तु प्रजनस्य विवक्षितत्वात् ।

६ एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्वम् ।

७ अवयवान्यत्वाच्च ।

**एको गोत्रे ॥ ९३ ॥**

१ उत्पादयितारं प्रत्यपत्ययोगात्तस्य च विवक्षितत्वादेकवचनं गोत्रे ।

२ तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो गोत्रे नियतत्वात् ।

३ परमप्रकृतेश्चोत्पत्तिः ।

४ स्त्रियां चानियमः ।

५ यूनि चान्तर्हितेऽप्राप्तिः ।

६ सर्वेषामपत्ययोगात्प्रत्ययान्ताद्गोत्रे प्रति-षेधार्थमेको गोत्रे ।

७ नियमानुपपत्तिश्च ।

८ न ह्येकस्मिन्नपत्येऽनेकप्रत्ययप्राप्तिः ।

९ अपत्यान्तरे शब्दान्तरात्प्रत्ययान्तर-प्राप्तिः[4] ।

१० तस्मात्प्रतिषेधः ।

११ संज्ञाकारिभ्यो वा प्रत्ययोत्पत्तिः ।

१२ गोत्राद्यूनीति च ।

१३ तच्च जात्यादिनिवृत्त्यर्थम् ।

**गोत्राद्यून्यस्त्रियाम् ॥ ९४ ॥**

**अत इञ् ॥ ९५ ॥**

१ इञो वृद्धावृद्धाभ्यां फिञ्फिनौ विप्रति-षेधेन ।

२ तद्राजश्च ।

**बाह्वादिभ्यश्च ॥ ९६ ॥**

१ बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः ।

२ संबन्धिशब्दप्रत्ययानां तत्सदृशात्प्रति-षेधः ।

**सुधातुरकङ् च ॥ ९७ ॥**

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । राजन्याद्वुञ्मनुष्याच्च ज्ञापकं लौकिकं परम् । ३ प. पुस्तके इतः परमधिकम् । तस्येदमित्यपत्येऽपि । बाधनार्थं तु कृतं भवेत् । उत्सर्गः शेष एवासौ । वृद्धान्यस्य प्रयोजनम् । ४ प. पुस्तके इतः परमधिकम् । अपत्यं समुदायश्चोन्नियमोऽत्र समीक्षितः । तस्मिन् सुबहवः प्राप्ता नियमोऽस्य भविष्यति ।

१ सुधातृव्यासयोः ।

गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ ९८ ॥

नडादिभ्यः फक् ॥ ९९ ॥

हरितादिभ्योऽञः ॥ १०० ॥

यञिञोश्च ॥ १०१॥

शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ॥ १०२ ॥

द्रोणपर्वतजीवन्तादन्यतरस्याम्॥१०३॥

अनृष्यानन्तर्ये बिदादिभ्योऽञ्॥१०४॥

१ अनृष्यानन्तर्यवचनमनर्थकं संज्ञागोत्राधिकारात् ।

गर्गादिभ्यो यञ् ॥ १०५ ॥

मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ॥ १०६ ॥

कपिबोधादाङ्गिरसे ॥ १०७ ॥

वतण्डाच्च ॥ १०८ ॥

लुक् स्त्रियाम् ॥ १०९ ॥

अश्वादिभ्यः फञ् ॥ ११० ॥

भर्गात्त्रैगर्ते ॥ १११ ॥

शिवादिभ्योऽण् ॥ ११२ ॥

अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥ ११३ ॥

ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ११४ ॥

१ ऋषिस्त्र्यणो ढग्ढ्रकौ विप्रतिषेधेन ।

२ द्व्यचो ढको ढ्रग्ढञौ ।

३ न वृष्ण्यणः पुनर्वचनमन्यनिवृत्त्यर्थम् ।

४ तस्मादृषिभ्योऽण्विधानेऽन्यादिप्रतिषेधः।

५ ढकः पुनर्वचनमन्यनिवृत्त्यर्थम् ।

६ तस्मात्तन्नामिकाण्यद्व्यचः ।

७ ऋष्यन्धकवृष्णिकुर्वणः सेनान्ताण्ण्यः[1] ।

मातुरुत् संख्यासंभद्रपूर्वायाः ॥ ११५ ॥

कन्यायाः कनीन च ॥ ११६ ॥

विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ॥ ११७ ॥

पीलाया वा ॥ ११८ ॥

ढक् च मण्डूकात् ॥ ११९ ॥

स्त्रीभ्यो ढक् ॥ १२० ॥

द्व्यचः ॥ १२१ ॥

इतश्चानिञः ॥ १२२ ॥

शुभ्रादिभ्यश्च ॥ १२३ ॥

विकर्णकुषीतकात्काश्यपे ॥ १२४ ॥

भ्रुवो वुक् च ॥ १२५ ॥

कल्याण्यादीनामिनङ् च ॥ १२६ ॥

कुलटाया वा ॥ १२७ ॥

चटकाया ऐरक् ॥ १२८ ॥

१ चटकायाः पुंलिङ्गनिर्देशः ।

२ स्त्रियामपत्ये लुक् ।

गोधाया ढ्रक् ॥ १२९ ॥

आरगुदीचाम् ॥ १३० ॥

१ आरग्वचनमनर्थकं रका सिद्धत्वात् ।

क्षुद्राभ्यो वा ॥ १३१ ॥

पितृष्वसुश्छण् ॥ १३२ ॥

ढकि लोपः ॥ १३३ ॥

मातृष्वसुश्च ॥ १३४ ॥

चतुष्पाद्भ्यो ढञ् ॥ १३५ ॥

---

१ प. पुस्तके इतः परमधिकम् । सुधातृव्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम् । २ प पुस्तके इतः परमधिकम् । वडवाया वृषे वाच्ये । अणू कुञ्चाकोकिलात्स्मृतः । आरक् पुंसि ततोऽन्यत्र गोधाया ढ्रग्विधौ स्मृतः

**गृष्ट्यादिभ्यश्च ॥ १३६ ॥**

**राजश्वशुराद्यत् ॥ १३७ ॥**

१ राज्ञोऽपत्ये जातिग्रहणम् ।

**क्षत्राद्घः ॥ १३८ ॥**

**कुलात्खः ॥ १३९ ॥**

**अपूर्वपदादन्यतरस्यां यड्ढकञौ ।१४०।**

**महाकुलादञ्खञौ ॥ १४१ ॥**

**दुष्कुलाड्ढक् ॥ १४२ ॥**

**स्वसुश्छः ॥ १४३ ॥**

**भ्रातुर्व्यच्च ॥ १४४ ॥**

**व्यन्सपत्ने ॥ १४५ ॥**

१ व्यन्वचनमनर्थकं प्रत्ययार्थाभावात् ।

**रेवत्यादिभ्यष्ठक् ॥ १४६ ॥**

**गोत्रस्त्रियाः कुत्सने ण च ॥ १४७ ॥**

१ गोत्रस्त्रियाः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ।

२ लुगर्थमिति चेन्न लुक्प्रतिषेधात्[1] ।

३ व्यवहितत्वादप्रतिषेध इति चेन्न पुंवद्भावात् ।

४ फिनर्थं तु ।

५ पुंवद्भावप्रतिषेधार्थं च ।

६ गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम् ।

७ अवंश्यत्वाद्वा स्त्रियाः प्रयोजनम् ।

**वृद्धाट्ठक् सौवीरेषु बहुलम् ॥ १४८ ॥**

**फेश्छ च ॥ १४९ ॥**

**फाण्टाहृतिमिमताभ्यां णफिञौ । १५०॥**

१ फाण्टाहृतेः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ।

२ पुंवद्भावप्रतिषेधार्थं तु ।

३ उक्तं वा ।

**कुर्वादिभ्यो ण्यः ॥ १५१ ॥**

१ वामरथस्य कण्वादिवत्स्वरवर्जम् ।

**सेनान्तलक्षणकारिभ्यश्च ॥ १५२ ॥**

**उदीचामिञ् ॥ १५३ ॥**

१ उदीचामिञ्विधौ तक्ष्णोऽण्वचनम् ।

२ शिवादिरिति चेण्ण्यविधिः ।

३ सिद्धं तूदीचां वा ण्यवचनात् ।

**तिकादिभ्यः फिञ् ॥ १५४ ॥**

**कौसल्यकार्माराभ्यां च ॥ १५५ ॥**

१ फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट्[2] च[3] ।

**अणो द्व्यचः ॥ १५६ ॥**

**उदीचां वृद्धादगोत्रात् ॥ १५७ ॥**

**वाकिनादीनां कुक् च ॥ १५८ ॥**

१ कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् ।

२ पूर्वान्ते नलोपवचनम् ।

३ सिद्धं त्वादिष्टस्य कुड्वचनात् ।

४ कारिभ्य इञोऽगोत्रात्फिञ्विप्रतिषेधेन ।

**पुत्रान्तादन्यतरस्याम् ॥ १५९ ॥**

**प्राचामवृद्धात् फिन् बहुलम् ॥ १६० ॥**

**मनोर्जातावञ्यतौ षुक् च[4] ॥ १६१ ॥**

---

१ प. पुस्तके इतः परमधिकम् । व्यवहितत्वादप्रतिषेधः । २ इदं प. पुस्तके नास्ति । ३ प. पुस्तके इतः परमधिकम् । सिद्धं त्वादिष्टस्य युड्वचनात् । ४ प. पुस्तके इतःपरमधिकम् । अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ।

**अपत्यं पौत्रप्रभृति गोत्रम् ॥ १६२ ॥**

१ पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यं तस्य पौत्रप्रभृतिसंज्ञाकरणम् ।

२ जीवद्वंश्यं च[1] कुत्सितम् ।

**जीवति तु वंश्ये युवा ॥ १६३ ॥**

१ जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेक्षं च ।

२ तच्च दैवदत्त्यर्थम् ।

३ वृद्धस्य च पूजायाम्[2] ।

४ आपत्यो वा गोत्रम् ।

५ परमप्रकृतेश्चापत्यः ।

६ आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः ।

७ स चास्त्रियाम् ।

८ एको गोत्रग्रहणानर्थक्यं च ।

९ बहुवचनलोपिषु च सिद्धम् ।

**भ्रातरि च ज्यायसि ॥ १६४ ॥**

**वान्यस्मिन्सपिण्डे स्थविरतरे जीवति[3] ॥ १६५ ॥**

**जनपदशब्दात्क्षत्रियादञ् ॥ १६६ ॥**

१ क्षत्रियादेकराजात्संघप्रतिषेधार्थम् ।

२ क्षत्रियग्रहणानर्थक्ये चोक्तम्[4] ।

३ क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्[5] ।

**साल्वेयगान्धारिभ्यां च ॥ १६७ ॥**

**द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ १६८ ॥**

१ अणो ञ्यङ्ण्येञो विप्रतिषेधेन ।

२ ञ्यङः कुरुनादिभ्यो ण्यः ।

**वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ १६९ ॥**

**कुरुनादिभ्यो ण्यः ॥ १७० ॥**

**साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ १७१ ॥**

**ते तद्राजाः ॥ १७२ ॥**

**कम्बोजाल्लुक् ॥ १७३ ॥**

१ कम्बोजादिभ्यो लुग्वचनं चोडाद्यर्थम्[6] ।

**स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ १७४ ॥**

**अतश्च ॥ १७५ ॥**

१ अत[7] इति तदन्ताग्रहणमवन्त्यादिभ्यो लुग्वचनात् ।

२ योधेयादिप्रतिषेधो ज्ञापकः पर्श्वादिलुकः ।

**न प्राच्यभर्गादियौधेयादिभ्यः ॥ १७६ ॥**

इति चतुर्थाध्यायस्य प्रथमः पादः ।

---

१ प. पुस्तके च स्थाने तु इति पाठः । २ वृद्धस्य च पूजायाम् । यूनश्च कुत्सायाम् । इति द्वयं वैदिक-पुस्तके काशिकापुस्तके च सूत्रद्वयत्वेन परिगृहीतम् । बो. पुस्तके तथैव गृहीतम् किंतु ( ) इति चिह्नान्तर्गतं प्रदर्शितम् । वस्तुतस्तु द्वयमिदं वार्तिकम् । भाष्ये तथैव परिग्रहणात् । सर्वेषु पुस्तकेषु ( प. बा. प्र. कं ) वार्तिकत्वेनैव तस्यो कथनम् । प. पुस्तके वार्तिकद्वयस्य 'जीवति तु वंश्ये युवा' इति स्थलं प्रदर्शितम् । किंतु महाभाष्ये वृद्धस्य पूजायामित्येकमेव पूर्वोक्तस्थले लभ्यते। यूनश्च कुत्सयामिति तु नोपलभ्यते । अस्माभिर्वार्तिक-पाठ एव ग्रहणं कृतम् । अत एव सूत्रत्वेनैतयोरग्रहः । ३ प. पुस्तके इतः परमधिकम् । गोत्रयुनोः समावेशे को दोषस्तत्कृतं भवेत् । यस्कादिषु न दोषोऽस्ति न यूनीत्यनुवर्तनात् । दोषोऽत्रिविदग्श्चाला न यूनीत्यनुवर्तनात् । कण्वादिषु न दोषोऽस्ति न न्यूनयस्ति ततः परम् । एको गोत्रे प्रतिपदम् । गोत्राद्यूनि च तत्स्मरेत । पूरो-राजन्याद्वुञ्मनुष्याच्च ज्ञापकं लौकिकं परम् । ४ प. पुस्तके नास्ति । ५ प. पुस्तके इतः परमधिकम् । पर्श्वादिभ्यो रण्वक्तव्यः । पाण्डोर्ड्यण्वक्तव्यः । ६ प. पुस्तके चोलाद्यर्थम् । ७ प. पुस्तके इतः परमधिकम् । पर्श्वादिभ्यो लुग्वक्तव्यः ।

**तेन रक्तं रागात् ॥ १ ॥**

१ रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाध्यानर्थक्यम् ।

**लाक्षारोचनाट्ठक् ॥ २ ॥**

१ ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम् ।

२ नील्या अन् ।

३ पीतात्कन् ।

४ हरिद्रामहारजनाभ्यामञ् ।

**नक्षत्रेण युक्तः कालः ॥ ३ ॥**

१ नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययविधानम् ।

२ तत्रोत्तरपदलोपः ।

३ लिङ्गवचनानुपपत्तिश्च ।

४ कालयोगात्सिद्धम् ।

५ तथा च संप्रत्ययः ।

**लुबविशेषे ॥ ४ ॥**

**संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ५ ॥**

**द्वन्द्वाच्छः ॥ ६ ॥**

**दृष्टं साम ॥ ७ ॥**

१ दृष्टं साम कलेर्ढक्[1] ।

**कलेर्ढक् ॥ ८ ॥**

**वामदेवाड्ड्यड्ड्यौ ॥ ९ ॥**

**परिवृतो रथः ॥ १० ॥**

१ परिवृतो रथ इति तदेकान्तग्रहणम् ।

**पाण्डुकम्बलादिनिः ॥ ११ ॥**

**द्वैपवैयाघ्रादञ् ॥ १२ ॥**

**कौमारापूर्ववचने ॥ १३ ॥**

१ कौमारापूर्ववचन इत्युभयतः स्त्रिया अपर्वत्वे[2] ।

२ पुंयोगात्स्त्र्यभिधानम् ।

**तत्रोद्धृतममत्रेभ्यः ॥ १४ ॥**

**स्थण्डिलाच्छयितरि व्रते ॥ १५ ॥**

**संस्कृतं भक्षाः ॥ १६ ॥**

**शूलोखाद्यत् ॥ १७ ॥**

**दध्नष्ठक् ॥ १८ ॥**

**उदश्वितो ऽन्यतरस्याम् ॥ १९ ॥**

**क्षीराड्ढञ् ॥ २० ॥**

**सास्मिन्पौर्णमासीति ॥ २१ ॥**

१ सास्मिन्पौर्णमासीति संज्ञाग्रहणम् ।

२ असंज्ञायां गरीयानुपसंयोगः ।

**आग्रहायण्यश्वत्थाट्ठक् ॥ २२ ॥**

**विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ॥ २३ ॥**

**सास्य देवता ॥ २४ ॥**

**कस्येत् ॥ २५ ॥**

**शुक्राद्घन् ॥ २६ ॥**

**अपोनप्त्रपांनप्तृभ्यां घः ॥ २७ ॥**

**छ च ॥ २८ ॥**

१ छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् ।

२ शतरुद्राद्घ च ।

**महेन्द्राद्घाणौ च ॥ २९ ॥**

१ प. पुस्तके इतः परमधिकम् । सर्वत्राग्निकलिभ्यां ढक् । दृष्टे सामनि जाते चाण् डिद्द्विर्वा विधीयते । तीयादीकक् न विधायाः गोत्रादङ्कवदिष्यते । २ प. पुस्तके इतः परमधिकम् । कौमारापूर्ववचने कुमार्या अण्विधीयते । अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ।

**सोमाट्ट्यण् ॥ ३० ॥**

**वाय्वृतुपित्रुषसो यत् ॥ ३१ ॥**

**द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ ३२ ॥**

**अग्नेर्ढक् ॥ ३३ ॥**

**कालेभ्यो भववत् ॥ ३४ ॥**

१ कालेभ्यो भवे प्रत्ययमात्रप्रसङ्गः ।

२ यः कालेभ्यो भवे तस्य विधाने प्रातिपदिकमात्रात्प्रसङ्गः ।

३ सिद्धं तूभयनिर्देशात् ।

**महाराजप्रोष्ठपदाट्ठञ् ॥ ३५ ॥**

१ ठञ्प्रकरणे तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् ।

२ पूर्णमासादण् ।

**पितृव्यमातुलमातामहपितामहाः ॥ ३६ ॥**

१ पितृमातृभ्यां भ्रातरि व्यड्डुलचौ ।

२ मातृपितृभ्यां पितरि डामहच् ।

३ मातरि षिच्च ।

४ महो वा छन्दस्यानङोऽवग्रहदर्शनात् ।

५ अवेर्दुग्धे सोढदूसमरीसचः ।

६ तिलान्निष्फलात्पिञ्जपेजौ ।

७ पिञ्जच्छन्दसि डिच्च ।

**तस्य समूहः ॥ ३७ ॥**

**भिक्षादिभ्योऽण् ॥ ३८ ॥**

१ भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधौ ।

**गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्[1] ॥ ३९ ॥**

१ अञो वुञ्पूर्वविप्रतिषिद्धम् ।

२ ठक्तु विप्रतिषेधात् ।

**केदाराद्यञ् च[2] ॥ ४० ॥**

**ठञ् कवचिनश्च ॥ ४१ ॥**

**ब्राह्मणमाणववाडवाद्यन् ॥ ४२ ॥**

१ यन्प्रकरणे पृष्ठादुपसंख्यानम् ।

**ग्रामजनबन्धुभ्यस्तल्[3] ॥ ४३ ॥**

१ अह्नः खः ।

२ क्रतौ ।

३ पर्श्वाः सण्[4] ।

**अनुदात्तादेरञ् ॥ ४४ ॥**

**खण्डिकादिभ्यश्च[5] ॥ ४५ ॥**

१ अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायाम् ।

**चरणेभ्यो धर्मवत् ॥ ४६ ॥**

**अचित्तहस्तिधेनोष्ठक् ॥ ४७ ॥**

**केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥ ४८ ॥**

**पाशादिभ्यो यः ॥ ४९ ॥**

१ पृथग्वातादर्शनादसमूहः ।

२ शीघ्रत्वे तु ।

**खलगोरथात् ॥ ५० ॥**

**इनित्रकट्यचश्च ॥ ५१ ॥**

---

१ प. पुस्तके इतः परमधिकम् । वृद्धाच्चेति वक्तव्यम् । २ प. पुस्तके इतःपरमधिकम् । गणिकायाश्चेति वक्तव्यम् । ३ प. पुस्तके इतः परमाधिकम् । गजसहायाभ्यां चेति वक्तव्यम् । ४ प. पुस्तके सण्स्थाने 'णस्' पाठः । ५ प. पुस्तके इतः परमधिकम् । अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् । गोत्राद्वुञ् न च तद्गोत्रम् । तदन्तान्न स सर्वतः । ज्ञापकं स्यात्तदन्तत्वे । तथा चापिशलेर्विधिः । सेनायां नियमार्थं वा । यथा बाध्येत वाञ्वुना ।

१ खलादिभ्य इनिः ।

**विषयो देशे ॥५२ ॥**

१ विषयाभिधाने जनपदे लुब्बहुवचनविषयात् ।

२ गान्धार्यादिभ्यो वा ।

३ राजन्यादिभ्यो वा वुञ् ।

४ बैल्ववनादिभ्यो नित्यम् ।

५ न वाभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुब्विषयविवक्षायां प्रत्ययः।

**राजान्यादिभ्यो वुञ् ॥ ५३ ॥**

**भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ ५४ ॥**

**सो ऽस्यादिरिति च्छन्दसः प्रगाथेषु ॥ ५५ ॥**

१ छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानम् ।

**संग्रामे प्रयोजनयोद्धृभ्यः ॥ ५६ ॥**

**तदस्यां प्रहरणमिति क्रीडायां णः ॥५७॥**

**घञः सास्यां क्रियेति ञः ॥ ५८ ॥**

**तदधीते तद्वेद ॥ ५९ ॥**

**क्रतूक्थादिसूत्रान्ताट्ठक्[1] ॥ ६० ॥**

**क्रमादिभ्यो वुन् ॥ ६१ ॥**

**अनुब्राह्मणादिनिः ॥ ६२ ॥**

**वसन्तादिभ्यष्ठक् ॥ ६३ ॥**

**प्रोक्ताल्लुक् ॥ ६४ ॥**

**सूत्राच्च कोपधात्[2] ॥ ६५ ॥**

**छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६६ ॥**

१ अन्यत्राभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानां तद्विषयवचनम् ।

२ तत्र यथाधिकारं तद्विषयप्रसङ्गः ।

३ सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात् ।

४ याज्ञवल्क्यादिभ्यः प्रतिषेधः ।

५ इनिर्वा प्रोक्ते तद्विषयः ।

६ काश्यपकौशिकग्रहणं च कल्पे नियमार्थम् ।

**तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ६७ ॥**

**तेन निर्वृत्तम् ॥ ६८ ॥**

**तस्य निवासः ॥ ६९ ॥**

**अदूरभवश्च ॥ ७० ॥**

**ओरञ् ॥ ७१ ॥**

१ ओरञ्विधेर्नद्यां मतुञ्विप्रतिषिद्धम् ।

**मतोश्च बह्वजङ्गात् ॥ ७२ ॥**

**बह्वचः कूपेषु ॥ ७३ ॥**

**उदक्च विपाशः ॥ ७४ ॥**

**संकलादिभ्यश्च ॥ ७५ ॥**

**स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७६ ॥**

**सुवास्त्वादिभ्यो ऽण् ॥ ७७ ॥**

**रोणी ॥ ७८ ॥**

**कोपधाच्च ॥ ७९ ॥**

**वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठको ऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्ष-**

१ प. पुस्तके इतः परमधिकम् । तस्येदंप्रत्ययाल्लुक् । तस्येदंप्रत्ययस्य च । विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृतः । विद्या चानङ्गक्षत्रधर्मत्रिपूर्वा । आख्यानाख्यायिकेतिहासपुराणेभ्यश्च । अनुसूर्लक्ष्यलक्षणे च । सर्वसादेर्द्विगोश्च लः । इकन्पदोत्तरपदात् । शतषष्टेः षिकन्पथः । २ प. पुस्तके इतः परमधिकम् । संख्याप्रकृतेरिति वक्तव्यम् ।

**कर्णसुतंगमप्रगदिवराहकुमुदादिभ्यः ॥ ८० ॥**

**जनपदे लुप् ॥ ८१ ॥**

**वरणादिभ्यश्च ॥ ८२ ॥**

**शर्कराया वा ॥ ८३ ॥**

**ठक्छौ च ॥ ८४ ॥**

**नद्यां मतुप् ॥ ८५ ॥**

१ नद्यां मतुब्वचनं मत्वर्थेऽण्विधानात् ।

२ निर्वृत्ताद्यर्थं च ।

**मध्वादिभ्यश्च ॥ ८६ ॥**

**कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ८७ ॥**

**नडशादाड्ड्वलच् ॥ ८८ ॥**

**शिखाया वलच् ॥ ८९ ॥**

**उत्करादिभ्यश्छः ॥ ९० ॥**

**नडादीनां कुक् च ॥ ९१ ॥**

१ कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् ।

२ पूर्वान्ते ह्रस्वत्वम् ।

३ सिद्धं त्वादिष्टस्य कुङ्वचनात् ।

४ संनियोगात्सिद्धम् ।

**शेषे ॥ ९२ ॥**

१ शेषवचनं घादीनामपत्यादिष्वप्रसङ्गार्थम् ।

२ तस्येदंवचनात्प्रसङ्गः ।

३ विप्रतिषेधात्सिद्धम् ।

४ न वा परत्वाद् घादीनाम् ।

५ अणपवादत्वाच्चाण्विषये घादिप्रसङ्गः ।

**राष्ट्रावारपाराद्घखौ ॥ ९३ ॥**

१ अवारपाराद्विगृहीतादपि ।

२ विपरीताच्च ।

**ग्रामाद्यखञौ ॥ ९४ ॥**[1]

**कत्त्र्यादिभ्यो ढकञ् ॥ ९५ ॥**[2]

**कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु ॥ ९६ ॥**[3]

**नद्यादिभ्यो ढक् ॥ ९७ ॥**

**दक्षिणापश्चात्पुरसस्त्यक् ॥ ९८ ॥**

**कापिश्याः ष्फक् ॥ ९९ ॥**[4]

**रङ्कोरमनुष्ये ऽण् च ॥ १०० ॥**

१ रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात् ।

२ अमनुष्ये मनुष्यस्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वात् ।

३ अण्ग्रहणं च कच्छादिभ्योऽण्वचनात् ।

**द्युप्रागपागुदक्प्रतीचो यत् ॥ १०१ ॥**

**कन्थायाष्ठक् ॥ १०२ ॥**

**वर्णौ वुक् ॥ १०३ ॥**

**अव्ययात् त्यप् ॥ १०४ ॥**[5]

१ अव्ययात्त्यप्याविष्टयस्योपसंख्यानं छन्दसि ।

२ अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो विप्रतिषेधेन ।

३ तेभ्यष्ठञ्ञिठौ ।

१ प. पुस्तके इतः परमधिकम् । महिषाच्चेति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । ग्रामाच्चेति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । कुलस्यापत्यं कुक्षिग्रीवात्तु कन्ढञः । ४ प. पुस्तके इतः परमधिकम् । बाह्वयुर्दिपर्दिभ्यश्चेति वक्तव्यम् । ५ प. पुस्तके इतः परमधिकम् । अमेहक्कतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः । त्यब्नेर्ध्रुवे । निसो गते । अरण्याण्ण्यः । दूरादेत्यः ।उत्तरादाहञ् ।

४ न वा ठञादीनां छापवादत्वात्तद्विषये चाभावादितरेषाम् ।
५ कोपधादणः पुनर्वचनमन्यनिवृत्त्यर्थम् ।
६ तस्मादन्तोदात्ते कोपधप्रतिषेधः ।
७ छादोर्देशे कालाद्‌ठञ् ।
८ नक्षत्रादण् ।
९ अव्ययाद् ट्युट्युलौ ।
१० शरीरावयवाद्यत् ।
११ वर्गान्ताच्चाशब्दे यत्खौ ।
१२ बह्वचोऽन्तोदात्ताट्ठञ् ।
१३ आयस्थानेभ्यष्ठक् ।
१४ विद्यायोनिसंबन्धेभ्यो वुञ् ।
१५ ऋतष्ठञ् ।
१६ रूप्यमयटौ ।
१७ अचित्ताट्ठक् ।
१८ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ।
१९ णिनिरन्तेवासिब्राह्मणेभ्यः ।
२० पत्त्रपूर्वादञ् ।
२१ द्वन्द्वाद्वुन्वैरिमैथुनिकयोः ।
२२ गोत्रचरणाद्वुञ् ।
२३ कण्वादीञोऽण्विधेः ।
२४ ठञ्ञिठाभ्यामोर्देशे ठञ् ।
२५ न वा ठञोऽनवकाशत्वात् ।
२६ योपधाप्रस्थादीनां वुञ् ।
२७ ओश्च ठञः ।
२८ जनपदानामकाणौ ।
२९ न वा वुञपवादत्वादणः ।
३१ कोपधादणोऽकान्ताच्छः ।
३१ धन्ववुञश्च ।
३२ न वा छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम् ।

**एषमोह्यःश्वसो ऽन्यतरस्याम् ॥ १०५ ॥**
**तीररूप्योत्तरपदादञ्ञौ ॥ १०६ ॥**
**दिक्पूर्वपदादसंज्ञायां ञः ॥ १०७ ॥**
**मद्रेभ्यो ऽञ् ॥ १०८ ॥**
**उदीच्यग्रामाच्च बह्वचो ऽन्तोदात्तात् ॥ १०९ ॥**
**प्रस्थोत्तरपदपलद्यादिकोपधादण् ।११०।**
**कण्वादिभ्यो गोत्रे ॥ १११ ॥**
**इञश्च ॥ ११२ ॥**
**न द्व्यचः प्राच्यभरतेषु ॥ ११३ ॥**
**वृद्धाच्छः ॥ ११४ ॥**
**भवतष्ठक्छसौ ॥ ११५ ॥**
**काश्यादिभ्यष्ठञ्ञिठौ ॥ ११६ ॥**
**वाहीकग्रामेभ्यश्च ॥ ११७ ॥**
**विभाषोशीनरेषु ॥ ११८ ॥**
**ओर्देशे ठञ् ॥ ११९ ॥**
**वृद्धात्प्राचाम् ॥ १२० ॥**
**धन्वयोपधाद्वुञ् ॥ १२१ ॥**
**प्रस्थपुरवहान्ताच्च ॥ १२२ ॥**
**रोपधेतोः प्राचाम् ॥ १२३ ॥**
**जनपदतदवध्योश्च ॥ १२४ ॥**

१ जनपदतदवध्योर्वुञ्विधानेऽवयवमात्रात् प्रसङ्गः ।
२ जनपदादिति चेद्वचनानानर्थक्यम् ।

**अवृद्धादपि बहुवचनविषयात् ॥१२५॥**
**कच्छाग्निवक्त्रवर्तोत्तरपदात् ॥ १२६ ॥**

धूमादिभ्यश्च ॥ १२७ ॥
नगरात्कुत्सनप्रावीण्ययोः ॥ १२८ ॥
अरण्यान्मनुष्ये[1] ॥ १२९ ॥
विभाषा कुरुयुगंधराभ्याम् ॥ १३० ॥

१ कुरुयुगंधरेभ्यो वावचनान्मनुष्यतत्स्थयोर्वुञ्विधानम् ।

मद्रवृज्योः कन् ॥ १३१ ॥
कोपधादण् ॥ १३२ ॥
कच्छादिभ्यश्च ॥ १३३ ॥

१ साल्वानां कच्छादिषु पाठोऽण्विधानार्थः।
२ न वापदातिगोयवागूग्रहणमवधारणार्थम् ।

मनुष्यतत्स्थयोर्वुञ् ॥ १३४ ॥
अपदातौ साल्वात् ॥ १३५ ॥
गोयवाग्वोश्च ॥ १३६ ॥
गर्तोत्तरपदाच्छः ॥ १३७ ॥

१ गर्तोत्तरपदाच्छविधेर्जनपदाद्वुञ्पूर्वविप्रतिषिद्धम् ।

गहादिभ्यश्च ॥ १३८ ॥

१ गहादिषु पृथिवीमध्यस्य मध्यमभावः ।
२ चरणसंबंधेन निवासलक्षणोऽण् ।

प्राचां कटादेः ॥ १३९ ॥
राज्ञः क च ॥ १४० ॥
वृद्धादकेकान्तखोपधात् ॥ १४१ ॥

१ अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् ।

कन्थापलदनगरग्रामह्रदोत्तरपदात् १४२
पर्वताच्च ॥ १४३ ॥
विभाषामनुष्ये[2] ॥ १४४ ॥
कृकणपर्णाद्भारद्वाजे[3] ॥ १४५ ॥

इति चतुर्थाध्यायस्य द्वितीयः पादः ।

युष्मदस्मदोरन्यतरस्यां खञ् च ॥ १ ॥

१ युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः ।
२ समसंख्याप्रतिषेधार्थः ।

तस्मिन्नणि च युष्माकास्माकौ ॥ २ ॥

१ आदेशवचने च ।
२ तत्र पुनः खञ्ग्रहणम् ।

तवकममकावेकवचने ॥ ३ ॥

१ एकार्थग्रहणं च।

अर्धाद्यत् ॥ ४ ॥

१ अर्धाद्यद्विधाने सपूर्वाट्ठञ् ।
२ दिक्पूर्वपदाद्यच्च ।

परावराधमोत्तमपूर्वाच्च ॥ ५ ॥
दिक्पूर्वपदाट्ठञ् च ॥ ६ ॥
ग्रामजनपदैकदेशादञ्ठञौ ॥ ७ ॥
मध्यान्मः ॥ ८ ॥
अ सांप्रतिके ॥ ९ ॥
द्वीपादनुसमुद्रं यञ् ॥ १० ॥
कालाट्ठञ् ॥ ११ ॥
श्राद्धे शरदः ॥ १२ ॥
विभाषा रोगातपयोः ॥ १३ ॥

१ प. पुस्तके इतः परमधिकम् । पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् । वा गोमयेष्विति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । ईकान्तादपीति वक्तव्यम् । ३ बो. प्र. क. पुस्तकेषु 'भरद्वाजे' इति पाठः ।

निशाप्रदोषाभ्यां च ॥ १४ ॥

श्वसस्तुट् च ॥ १५ ॥

१ श्वसस्तुड्व्यादेशानुपपत्तिरनादित्वात् ।

२ पूर्वान्ते कप्रतिषेधः ।

३ सिद्धं त्वादिष्टस्य तुड्वचनात् ।

४ संनियोगाद्वा ।

संधिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥ १६ ॥

प्रावृष एण्यः ॥ १७ ॥

वर्षाभ्यष्ठक् ॥ १८ ॥

छन्दसि ठञ् ॥ १९ ॥

वसन्ताच्च ॥ २० ॥

हेमन्ताच्च ॥ २१ ॥

सर्वत्राण् च तलोपश्च ॥ २२ ॥

१ हेमन्तस्याणि तलोपवचनानर्थक्यं हेम्नः प्रकृत्यन्तरत्वात् ।

२ अलोपदर्शनाच्च ।

सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ २३ ॥

१ सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियुक्तम्[1] ।

२ प्राह्णप्रगयोरेकारान्तत्वम् ।

३ तुट्युक्तम् ।

४ पूर्वान्ते विसर्जनीयः ।

५ सिद्धं त्वादिष्टस्य तुड्वचनात् ।

६ [2]संनियोगाद्वा ।

विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ २४ ॥

१ पूर्वाह्णापराह्णाभ्यां सुबन्तवचनं सप्तमीश्रवणार्थम् ।

२ अलुग्वचनं ज्ञापकमिति चेदव्ययात्सप्तमीप्रसङ्गः ।

तत्र जातः ॥ २५ ॥

१ तत्र जातादिषु वचनं नियमार्थम् ।

प्रावृषष्ठप् ॥ २६ ॥

संज्ञायां शरदो वुञ् ॥ २७ ॥

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ॥ २८ ॥

पथः पन्थ च ॥ २९ ॥

अमावास्याया वा ॥ ३० ॥

अ च ॥ ३१ ॥

सिन्ध्वपकराभ्यां कन् ॥ ३२ ॥

अणञौ च ॥ ३३ ॥

श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥३४॥

१ लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ।

२ फल्गुन्यषाढाभ्यां टानौ ।

३ श्रविष्ठाषाढाभ्यां छण् ।

४ न वा नक्षत्रेभ्यो बहुलं लुग्वचनात् ।

स्थानान्तगोशालखरशालाच्च ॥ ३५ ॥

वत्सशालाभिजिदश्वयुक्छतभिषजो वा ॥ ३६ ॥

नक्षत्रेभ्यो बहुलम् ॥ ३७ ॥

---

१ प. पुस्तके इतः परमधिकम् । चिरपरुत्परारिभ्यस्त्नः । प्रगस्य छन्दसि गलोपश्च । अग्रादिपश्चाड्डिमच् । अन्ताच्च । २ प. पुस्तके इतः परमधिकम् । सायमोऽह्ने मलोपः । तरे च । वा सप्तम्याम् । ३ इदं प. पुस्तके नास्ति ।

कृतलब्धक्रीतकुशलाः ॥ ३८ ॥

प्रायभवः ॥ ३९ ॥

१ प्रायभवग्रहणमनर्थकं तत्रभवेन कृतत्वात् ।

२ अनित्यभवः प्रायभव इति चेन्मुक्तसंशयेन तुल्यम् ।

उपजानूपकर्णोपनीवेष्ठक् ॥ ४० ॥

संभूते ॥ ४१ ॥

कोशाड्ढञ् ॥ ४२ ॥

१ विकारे कोशाड्ढञ् ।

२ संभूते ह्यर्थानुपपत्तिः ।

कालात्साधुपुष्प्यत्पच्यमानेषु ॥ ४३ ॥

उप्ते च ॥ ४४ ॥

आश्वयुज्या वुञ् ॥ ४५ ॥

ग्रीष्मवसन्तादन्यतरस्याम् ॥ ४६ ॥

देयमृणे ॥ ४७ ॥

कलाप्यश्वत्थयवबुसाद्वुन् ॥ ४८ ॥

ग्रीष्मावरसमाद्वुञ् ॥ ४९ ॥

संवत्सराग्रहायणीभ्यां ठञ् च ॥ ५० ॥

व्याहरति मृगः ॥ ५१ ॥

तदस्य सोढम् ॥ ५२ ॥

तत्र भवः ॥ ५३ ॥

१ तत्रप्रकरणे तत्रेति पुनर्वचनं कालनिवृत्त्यर्थम् ।

दिगादिभ्यो यत् ॥ ५४ ॥

शरीरावयवाच्च ॥ ५५ ॥

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ ५६ ॥

ग्रीवाभ्यो ऽण् च ॥ ५७ ॥

गम्भीराञ्ञ्यः ॥ ५८ ॥

१ ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् ।

२ अव्ययीभावाद्विधान उपकूलादिभ्यः प्रतिषेधः ।

अव्ययीभावाच्च ॥ ५९ ॥

अन्तःपूर्वपदाट्ठञ्[1] ॥ ६० ॥

ग्रामात्पर्यनुपूर्वात् ॥ ६१ ॥

जिह्वामूलाङ्गुलेश्छः ॥ ६२ ॥

वर्गान्ताच्च ॥ ६३ ॥

अशब्दे यत्खावन्यतरस्याम् ॥ ६४ ॥

कर्णललाटात्कनलंकारे ॥ ६५ ॥

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥ ६६ ॥

१ भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः ।

२ कृतनिर्देशौ हि तौ ।

३ तत्र व्याख्यातव्यनाम्नो ग्रहणं भवार्थम् ।

४ व्याख्याने ह्यवचनात्सिद्धम् ।

५ भवे मन्त्रेषु लुग्वचनम् ।

६ कल्पे च व्याख्याने ।

७ न वा तादर्थ्यात्ताच्छब्द्यम् ।

बह्वचो ऽन्तोदात्ताट्ठञ् ॥ ६७ ॥

क्रतुयज्ञेभ्यश्च ॥ ६८ ॥

---

१ प. पुस्तके इतः परमधिकम् । बर्हिर्देवपञ्चजनेभ्यश्चेति वक्तव्यमिति काशिका । समानस्य तदादेश्च अध्यात्मादिषु चेष्यते । ऊर्ध्वं दमाच्च देहाच्च । लोकोत्तरपदस्य च । मुखपार्श्वतसोरीयः । कुग्जनस्य परस्य च । ईयः कार्योऽथ मध्यस्य । मण्मीयौ चापि प्रत्ययौ । मध्य मध्यं दिनण्चास्मात् । स्थाम्नो लुगजिनात्तथा ।

अध्यायेष्वेवर्षेः ॥ ६९ ॥

पौरोडाशपुरोडाशात् ष्ठन् ॥ ७० ॥

छन्दसो यदणौ ॥ ७१ ॥

द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ॥ ७२ ॥

१ नामाख्यातग्रहणं संघातविगृहीतार्थम् ।

अणृगयनादिभ्यः ॥ ७३ ॥

तत आगतः ॥ ७४ ॥

ठगायस्थानेभ्यः ॥ ७५ ॥

शुण्डिकादिभ्यो ऽण् ॥ ७३ ॥

विद्यायोनिसंबन्धेभ्यो वुञ् ॥ ७७ ॥

ऋतष्ठञ् ॥ ७८ ॥

पितुर्यच्च ॥ ७९ ॥

गोत्रादङ्कवत् ॥ ८० ॥

हेतुमनुष्येभ्यो ऽन्यतरस्यां रूप्यः ॥ ८१ ॥

मयट् च ॥ ८२ ॥

प्रभवति ॥ ८३ ॥

विदूराञ्ञ्यः ॥ ८४ ॥

तद्गच्छति पथिदूतयोः ॥ ८५ ॥

अभिनिष्क्रामति द्वारम् ॥ ८६ ॥

अधिकृत्य कृते ग्रन्थे ॥ ८७ ॥

१ अधिकृत्य कृते ग्रन्थे लुबाख्यायिकाभ्यो बहुलम् ।

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ८८ ॥

१ द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः ।

सो ऽस्य निवासः ॥ ८९ ॥

अभिजनश्च ॥ ९० ॥

आयुधजीविभ्यश्छः पर्वते ॥ ९१ ॥

शण्डिकादिभ्यो ञ्यः ॥ ९२ ॥

सिन्धुतक्षशिलादिभ्यो ऽणञौ ॥ ९३ ॥

तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥ ९४ ॥

भक्तिः ॥ ९५ ॥

अचित्तादेशकालाट्ठक् ॥ ९६ ॥

महाराजाट्ठञ् ॥ ९७ ॥

वासुदेवार्जुनाभ्यां वुन् ॥ ९८ ॥

गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥ ९९ ॥

जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ १०० ॥

१ सर्ववचनं प्रकृतिनिह्रासार्थम् ।

२ तच्च मद्रवृज्यर्थम् ।

तेन प्रोक्तम् ॥ १०१ ॥

१ प्रोक्तग्रहणमनर्थकं तत्रादर्शनात् ।

२ ग्रन्थे च दर्शनात् ।

३ छन्दोऽर्थमिति चेत्तुल्यम् ।

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ १०२ ॥

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ १०३ ॥

कलापिवैशंपायनान्तेवासिभ्यश्च ॥ १०४ ॥

१ प्रत्यक्षकारिग्रहणम् ।

२ कलापिखाडायनग्रहणं ज्ञापकं वैशम्पायनान्तेवासिषु प्रत्यक्षकारिग्रहणस्य ।

---

१ प. पुस्तके इतः परमधिकम् । बालवायो विदूरं च । प्रकृत्यन्तरमेव वा । न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ।

३ छन्दोग्रहणं चेतरथा ह्यतिप्रसङ्गः ।

**पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ १०५ ॥**

१ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात् ।

**शौनकादिभ्यश्छन्दसि ॥ १०६ ॥**

**कठचरकाल्लुक् ॥ १०७ ॥**

**कलापिनोऽण् ॥ १०८ ॥**

**छगलिनो ढिनुक् ॥ १०९ ॥**

**पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ॥ ११० ॥**

**कर्मन्दकृशाश्वादिनिः ॥ १११ ॥**

**तेनैकदिक् ॥ ११२ ॥**

**तसिश्च ॥ ११३ ॥**

**उरसो यच्च ॥ ११४ ॥**

**उपज्ञाते ॥ ११५ ॥**

**कृते ग्रन्थे ॥ ११६ ॥**

१ कृते ग्रन्थे मक्षिकादिभ्योऽण् ।

२ तद्विशेषेभ्यश्च ।

३ योगविभागात्सिद्धम् ।

**संज्ञायाम् ॥ ११७ ॥**

**कुलालादिभ्यो वुञ् ॥ ११८ ॥**

**क्षुद्राभ्रमरवटरपादपादञ् ॥ ११९ ॥**

**तस्येदम् ॥ १२० ॥**

१ तस्येदमित्यसंनिहितेऽप्राप्तिरिदमः प्रत्यक्षवाचित्वात् ।

२ सिद्धं तु यद्योगा षष्ठी[1] तत्र ।

३ अनन्तरादिषु च प्रतिषेधः ।

४ सिद्धं तु परिगणनात् ।

५ स्वे ग्रामजनपदमनुष्येभ्यः ।

६ पत्त्राद्वाह्ये ।

७ रथाद्रथाङ्गे ।

८ वहेस्तुरणिट ।

९ अग्नीधः शरणे रञ् भं च ।

१० समिधामाधाने षेण्यण् ।

११ चरणाद्धर्माम्नाययोः ।

**रथाद्यत् ॥ १२१ ॥**

**पत्त्रपूर्वादञ् ॥ १२२ ॥**

**पत्त्राध्वर्युपरिषदश्च ॥ १२३ ॥**

**हलसीराट्ठक् ॥ १२४ ॥**

**द्वन्द्वाद्वुन् वैरमैथुनिकयोः ॥ १२५ ॥**

१ वैरे देवासुरादिभ्यः प्रतिषेधः ।

**गोत्रचरणाद्वुञ् ॥ १२६ ॥**

**संघाङ्कलक्षणेष्वञ्यञिञामण् ॥ १२७ ॥**

१ संघादिषु घोषग्रहणम् ।

२ संघादिषु प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ।

३ लिङ्गपुंवद्भावप्रतिषेधार्थं तु ।

**शाकलाद्वा ॥ १२८ ॥**

**छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥ १२९ ॥**

**न दण्डमाणवान्तेवासिषु ॥ १३० ॥**

**रैवतिकादिभ्यश्छः[2] ॥ १३१ ॥**

---

१ प. पुस्तके नास्ति । २ अत्रत्यं वार्तिकद्वयं न सूत्रद्वयं यतस्तथा महाभाष्ये रैवतिकादिभ्यश्छः (४।३।१३१) इति सूत्र उपलम्भः। प्रथमस्य सूत्रपाठे ग्रहणमपाणिनीयमिति कैयटः । द्वितीयं सूत्रमिति कैयटः। इदमपि वार्तिकमेवेति हरदत्त इति विवरणम् । सूत्रत्वे चकारेण वार्तिकस्थस्याणः संग्रहस्यः क्लिष्टत्वादस्य वार्तिकत्वमेव युक्तम् । अस्माभिरत एव वार्तिकपाठ इदं द्वयं संगृहीतम् ।

१ कौपिञ्जलहास्तिपदादण् ।

२ आथर्वणिकस्येकलोपश्च ।

**तस्य विकारः ॥ १३२ ॥**

१ तस्यप्रकरणे[1] तस्यपुनर्वचनं शैषिकनिवृत्त्यर्थम् ।

२ तस्येदंवचनात्प्रसङ्गः[2] ।

३ न वा संप्रत्ययः ।

४ अवयवे च प्राण्योषधिवृक्षेभ्योऽनिवृत्तिः ।

५ अण्मयटोश्च विप्रतिषेधानुपपत्तिर्मयडुत्सर्गात् ।

६ अनुवृत्तौ हि [3]च्छोत्सर्गापवादविप्रतिषेधान्मयट् ।

**अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ १३३ ॥**

१ [4]विकारावयवयोरुक्तम् ।

**बिल्वादिभ्यो ऽण् ॥ १३४ ॥**

१ बिल्वादिषु गवीधुका[5]ग्रहणं मयट्प्रतिषेधार्थम् ।

**कोपधाच्च ॥ १३५ ॥**

**त्रपुजतुनोः षुक् ॥ १३६ ॥**

**ओरञ् ॥ १३७ ॥**

**अनुदात्तादेश्च ॥ १३८॥**

**पलाशादिभ्यो वा ॥ १३९ ॥**

**शम्याः ष्लञ् ॥ १४० ॥**

१ अनुदात्तादेरञो विधान आद्युदात्तान्ङीष उपसंख्यानम् ।

२ पदस्य ह्यनुदात्तादित्वम् ।

३ न वा समर्थस्यानुदात्तादित्वात् ।

४ पदग्रहणं परिमाणार्थम् ।

**मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १४१ ॥**

१ मयड्वैतयोर्वचनमपवादविषयेऽनिवृत्त्यर्थम् ।

२ एतयोरित्यर्थनिर्देशः ।

**नित्यं वृद्धशरादिभ्यः ॥ १४२ ॥**

**गोश्च पुरीषे ॥ १४३ ॥**

**पिष्टाच्च ॥ १४४ ॥**

**संज्ञायां कन् ॥ १४५ ॥**

**व्रीहेः पुरोडाशे ॥ १४६ ॥**

**असंज्ञायां तिलयवाभ्याम् ॥ १४७ ॥**

**द्व्यचश्छन्दसि ॥ १४८ ॥**

**नोत्वद्वर्ध्रबिल्वात् ॥ १४९॥**

**तालादिभ्यो ऽण् ॥ १५० ॥**

**जातरूपेभ्यः परिमाणे ॥ १५१ ॥**

**प्राणिरजतादिभ्यो ऽञ् ॥ १५२ ॥**

**ञितश्च तत्प्रत्ययात् ॥ १५३ ॥**

१ विकारावयवयोर्विकारावयवयुक्तत्वान्मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञो विधानम् ।

२ न वा दृष्टो ह्यवयवे समुदायशब्दो विकारे च प्रकृतिशब्दस्तस्मान्मयडभावः ।

४ विकारावयवशब्दात्प्रसङ्ग इति चेन्न तेनानभिधानात् ।

---

१ प. पुस्तके °प्रकरणे इत्यस्य स्थाने °ग्रहणे इति । २ प. पुस्तके इतः परमधिकम् । बाधनार्थं कृतं भवेत् । उत्सर्गः शेष एवासौ । ३ प. पुस्तके छस्यो° इति पाठः । ४ प. पुस्तके नास्ति । ५ प. पुस्तके गवेधुका° इति पाठः ।

५ अभिधाने ह्यन्यतोऽपि मयट्प्रसङ्गः ।

६ तस्मात्तत्प्रत्ययान्ताल्लुग्वचनम् ।

**क्रीतवत्परिमाणात् ॥ १५४ ॥**

१ क्रीतवत्परिमाणादङ्गं च ।

२ अणो वृद्धान्मयट् ।

३ ओरञोऽनुदात्तादेरञश्च ।

४ मयटः प्राण्यञ्विप्रतिषेधेन ।

५ न वानवकाशत्वादपवादो मयट् ।

६ प्राण्यञश्च ।

७ तस्मान्मयड्विधाने प्राणिप्रतिषेधः ।

८ अनुदात्तादेरञः प्राण्यञ्विप्रतिषेधेन ।

**उष्ट्राद्वुञ् ॥ १५५ ॥**

**उमोर्णयोर्वा ॥ १५६ ॥**

**एण्या ढञ् ॥ १५७ ॥**

**गोपयसोर्यत् ॥ १५८ ॥**

**द्रोश्च ॥ १५९ ॥**

**माने वयः ॥ १६० ॥**

**फले लुक् ॥ १६१ ॥**

१ फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात् ।

२ एकान्तदर्शनात्प्रसङ्ग इति चेद्वृक्षे लुग्वचनम् ।

**प्लक्षादिभ्योऽण् ॥ १६२ ॥**

**जम्ब्वा वा ॥ १६३ ॥**

**लुप् च ॥ १६४ ॥**

१ लुप्प्रकरणे फलपाकशुषामुपसंख्यानम् ।

२ पुष्पमूलेषु च बहुलम् ।

**हरीतक्यादिभ्यश्च ॥ १६५ ॥**

**कंसीयपरशव्ययोर्यञञौ लुक् च ॥ १६६ ॥**

इति चतुर्थाध्यायस्य तृतीयः पादः ॥

---

**प्राग्वहतेष्ठक् ॥ १ ॥**

१ ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् ।

२ आहौ प्रभूतादिभ्यः

३ पृच्छतौ सुस्नातादिभ्यः ।

४ गच्छतौ परदारादिभ्यः ।

**तेन दीव्यति खनति जयति जितम् ॥ २ ॥**

**संस्कृतम् ॥ ३ ॥**

**कुलत्थकोपधादण् ॥ ४ ॥**

**तरति ॥ ५ ॥**

**गोपुच्छाट्ठञ् ॥ ६ ॥**

**नौद्व्यचष्ठन् ॥ ७ ॥**

**चरति ॥ ८ ॥**

**आकर्षात् ष्ठल्[1] ॥ ९ ॥**

**पर्पादिभ्यः ष्ठन् ॥ १० ॥**

**श्वगणाट्ठञ् च ॥ ११ ॥**

**वेतनादिभ्यो जीवति ॥ १२ ॥**

**वस्नक्रयविक्रयाट्ठन् ॥ १३ ॥**

**आयुधाच्छ च ॥ १४ ॥**

**हरत्युत्सङ्गादिभ्यः ॥ १५ ॥**

**भस्त्रादिभ्यः ष्ठन् ॥ १६ ॥**

**विभाषा विवधात्[2] ॥ १७ ॥**

---

१ प. पुस्तके इतः परमधिकम् । आकर्षात् पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च । आवसथात्किसरादेः षितः षडेते ठगाधिकारे । २ प. पुस्तके अत्र वीवधाच्चेत्यधिकम् ।

अण् कुटिलिकायाः ॥ १८ ॥
निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ १९ ॥
त्रेर्मम्नित्यम् ॥ २० ॥
१ त्रेर्मब्नित्यवचनं विषयार्थम् ।
२ तत्र यथाधिकारं तद्विषयप्रसङ्गः ।
अपमित्ययाचिताभ्यां कक्कनौ ॥ २१ ॥
संसृष्टे ॥ २२ ॥
चूर्णादिनिः ॥ २३ ॥
लवणाल्लुक् ॥ २४ ॥
१ लवणाल्लुग्वचनानर्थक्यं रसवाचित्वात् ।
२ असंसृष्टे च दर्शनात् ।
३ संसृष्टे चादर्शनात् ।
मुद्गादण् ॥ २५ ॥
व्यञ्जनैरुपसिक्ते ॥ २६ ॥
ओजःसहोऽम्भसा वर्तते ॥ २७ ॥
तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ २८ ॥
परिमुखं च ॥ २९ ॥
प्रयच्छति गर्ह्यम् ॥ ३० ॥
१ प्रयच्छति गर्ह्याय ।
२ मेस्याल्लोपो वा ।
३ वृद्धेर्वृधुषिभावः ।
कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥ ३१ ॥
उञ्छति ॥ ३२ ॥
रक्षति ॥ ३३ ॥
शब्ददर्दुरं करोति ॥ ३४ ॥
पक्षिमत्स्यमृगान् हन्ति ॥ ३५ ॥
परिपन्थं च तिष्ठति ॥ ३६ ॥
माथोत्तरपदपदव्यनुपदं धावति ॥ ३७ ॥

आक्रन्दाट्ठञ् च ॥ ३८ ॥
पदोत्तरपदं गृह्णाति ॥ ३९ ॥
प्रतिकन्थार्थललामं च ॥ ४० ॥
धर्मं चरति ॥ ४१ ॥
१ अधर्माच्च ।
प्रतिपथमेति ठंश्च ॥ ४२ ॥
समवायान् समवैति ॥ ४३ ॥
परिषदो ण्यः ॥ ४४ ॥
सेनाया वा ॥ ४५ ॥
संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥ ४६ ॥
तस्य धर्म्यम् ॥ ४७ ॥
अण् महिष्यादिभ्यः ॥ ४८ ॥
ऋतोऽञ् ॥ ४९ ॥
१ नृनराभ्यामञ्वचनम् ।
२ विशसितुरिड्लोपश्च ।
३ विभाजयितुर्णिलोपश्च ।
अवक्रयः ॥ ५० ॥
तदस्य पण्यम् ॥ ५१ ॥
लवणाट्ठञ् ॥ ५२ ॥
किसरादिभ्यः ष्ठन् ॥ ५३ ॥
शलालुनोऽन्यतरस्याम् ॥ ५४ ॥
शिल्पम् ॥ ५५ ॥
मड्डुकझर्झरादणन्यतरस्याम् ॥ ५६ ॥
प्रहरणम् ॥ ५७ ॥
परश्वधाद् ठञ् च ॥ ५८ ॥
शक्तियष्ट्योरीकक् ॥ ५९ ॥
अस्ति नास्ति दिष्टं मतिः ॥ ६० ॥
शीलम् ॥ ६१ ॥

१ प. पुस्तके इतः परमधिकम् । भावप्रत्ययान्तादिमब्वक्तव्यः ।

छत्रादिभ्यो णः ॥ ६२ ॥
कर्माध्ययने वृत्तम् ॥ ६३ ॥
बह्वच्पूर्वपदाट्ठच् ॥ ६४ ॥
हितं भक्षाः ॥ ६५ ॥
१ हितं भक्षा इति चतुर्थीनिर्देशः ।
२ इतरथा ह्यनिर्देशः ।
तदस्मै दीयते नियुक्तम् ॥ ६६ ॥
श्राणामांसौदनाट् टिठन् ॥ ६७ ॥
भक्तादणन्यतरस्याम् ॥ ६८ ॥
तत्र नियुक्तः ॥ ६९ ॥
अगारान्ताट् ठन् ॥ ७० ॥
अध्यायिन्यदेशकालात् ॥ ७१ ॥
कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ७२ ॥
निकटे वसति ॥ ७३ ॥
आवसथात् ष्ठल् ॥ ७४ ॥
प्राग्घिताद्यत् ॥ ७५ ॥
तद्वहति रथयुगप्रासङ्गम् ॥ ७६ ॥
१ वहत्यभिधाने रथशकटहलसीरेभ्यः प्रत्ययविधानानर्थक्यं विहितत्वात् ।
२ शब्दभेदादविधानमिति चेदर्थाश्रयत्वात्प्रत्ययविधानस्यार्थसामान्यात्सिद्धम् ।
धुरो यड्ढकौ ॥ ७७ ॥
खः सर्वधुरात् ॥ ७८ ॥
एकधुराल्लुक् च ॥ ७९ ॥
शकटादण् ॥ ८० ॥
हलसीराट्ठक् ॥ ८१ ॥
संज्ञायां जन्याः ॥ ८२ ॥
१ जन्या इति निपातनानर्थक्यं पञ्चमीनिर्देशात् ।
विध्यत्यधनुषा ॥ ८३ ॥
१ विध्यत्यकरणेन ।
२ इतरथा ह्यतिप्रसङ्गः ।
धनगणं लब्धा ॥ ८४ ॥
अन्नाण्णः ॥ ८५ ॥
वशं गतः ॥ ८६ ॥
पदमस्मिन् दृश्यम् ॥ ८७ ॥
मूलमस्याबर्हि ॥ ८८ ॥
संज्ञायां धेनुष्या ॥ ८९ ॥
गृहपतिना संयुक्ते ञ्यः ॥ ९० ॥
नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ॥ ९१ ॥
धर्मपथ्यर्थन्यायादनपेते ॥ ९२ ॥
छन्दसो निर्मिते ॥ ९३ ॥
उरसोऽण् च ॥ ९४ ॥
हृदयस्य प्रियः ॥ ९५ ॥
बन्धने चर्षौ ॥ ९६ ॥
मतजनहलात् करणजल्पकर्षेषु ॥ ९७ ॥
तत्र साधुः ॥ ९८ ॥
प्रतिजनादिभ्यः खञ् ॥ ९९ ॥
भक्ताण्णः ॥ १०० ॥
परिषदो ण्यः ॥ १०१ ॥
कथादिभ्यष्ठक् ॥ १०२ ॥
गुडादिभ्यष्ठञ् ॥ १०३ ॥
पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०४ ॥

१ प. पुस्तके इतः परमधिकम् । शब्दभेदादविधानम् ।

सभाया यः ॥ १०५ ॥
ढश्छन्दसि ॥ १०६ ॥
समानतीर्थे वासी ॥ १०७
समानोदरे शयित ओ चोदात्तः ॥१०८॥
सोदराद्यः ॥ १०९ ॥
भवे छन्दसि ॥ ११० ॥
पाथोनदीभ्यां ड्यण् ॥ १११ ॥
वेशन्तहिमवद्भ्यामण् ॥ ११२ ॥
स्रोतसो विभाषा ड्यड्ड्यौ ॥ ११३ ॥
सगर्भसयूथसनुताद्यन् ॥ ११४ ॥
तुग्राद्धन् ॥ ११५ ॥
अग्राद्यत् ॥ ११६ ॥
घच्छौ च ॥ ११७ ॥
समुद्राभ्राद्धः ॥ ११८ ॥
बर्हिषि दत्तम् ॥ ११९ ॥
दूतस्य भागकर्मणी ॥ १२० ॥
रक्षोयातूनां हननी ॥ १२१ ॥
रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥१२२।
असुरस्य स्वम् ॥ १२३ ॥
मायायामण् ॥ १२४ ॥
तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥ १२५ ॥
अश्विमानण् ॥ १२६ ॥
वयस्यासु मूर्ध्नो मतुप् ॥ १२७ ॥
मत्वर्थे मासतन्वोः ॥ १२८ ॥
१ मासतन्वोरनन्तरार्थे वा ।
२ लुगकारेकाररेफाश्च ।
मधोर्ञ च ॥ १२९ ॥
ओजसो ऽहनि यत्खौ ॥ १३० ॥
वेशोयशआदेर्भगाद्यल् ॥ १३१ ॥
ख च ॥ १३२ ॥
पूर्वैः कृतमिनियौ च ॥ १३३ ॥
अद्भिः संस्कृतम् ॥ १३४ ॥
सहस्रेण संमितौ घः ॥ १३५॥
मतौ च ॥ १३६ ॥
सोममर्हति यः ॥ १३७ ॥
मये च ॥ १३८ ॥
मधोः ॥ १३९ ॥
वसोः समूहे च ॥ १४० ॥
१ अक्षरसमूहे छन्दस उपसंख्यानम् ।
२ छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् ।
३ अग्निरीशे वसव्यस्य ।
४ स्वार्थविज्ञानात्सिद्धम् ।
नक्षत्राद्धः ॥ १४१ ॥
सर्वदेवात् तातिल् ॥ १४२ ॥
शिवशमरिष्टस्य करे ॥ १४३ ॥
भावे च ॥ १४४ ॥

चतुर्थाध्यायस्य चतुर्थः पादः

---

## पञ्चमोऽध्यायः

प्राक्क्रीताच्छः ॥ १ ॥
१ [1]प्राग्वचन उक्तम् ।
उगवादिभ्यो यत् ॥ २ ॥
१ यञ्ञ्यावञः पूर्वविप्रतिषिद्धं सनङ्गूपानहौ प्रयोजनम् ।

---

१ इदं प. पुस्तके नास्ति ।

२ ढञ्च ।

३ हविरपूपादिभ्यो विभाषाया यत् ।

४ अन्नविकारेभ्यश्च ।

५ नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात् ।

६ सिद्धं तु शाखादिषु वचनाद्ध्रस्वत्वं च ।

७ नभ्यात्तु लुग्वचनम् ।

**कम्बलाच्च संज्ञायाम् ॥ ३ ॥**

१ हविरपूपादिभ्योऽप्राप्ते ।

**विभाषा हविरपूपादिभ्यः ॥ ४ ॥**

**तस्मै हितम् ॥ ५ ॥**

**शरीरावयवाद्यत् ॥ ६ ॥**

१ यत्प्रकरणे रथाच्च ।

**खलयवमाषतिलवृषब्रह्मणश्च ॥ ७ ॥**

**अजाविभ्यां थ्यन् ॥ ८ ॥**

**आत्मन्विश्वजनभोगोत्तरपदात्खः ॥ ९ ॥**

१ भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वात् ।

२ भोगीनरिति चेद्वावचनम् ।

३ राजाचार्याभ्यां नित्यम् ।

४ खविधाने पञ्चजनादुपसंख्यानम् ।

५ सर्वजनाट्ठञ्च ।

६ महाजनान्नित्यम् ।

**सर्वपुरुषाभ्यां णढञौ ॥ १० ॥**

१ सर्वाण्णस्य वावचनम् ।

२ पुरुषाद्वधे[1] ।

**माणवचरकाभ्यां खञ् ॥ ११ ॥**

**तदर्थं विकृतेः प्रकृतौ ॥ १२ ॥**

१ तदर्थमिति कृत्यनामभ्यष्ठञ् ।

२ न वा प्रयोजनेन कृतत्वात् ।

**छदिरुपधिबलेर्ढञ् ॥ १३ ॥**

१ उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावात् ।

२ सिद्धं तु कृदन्तस्य स्वार्थेऽञ्वचनात् ।

**ऋषभोपानहोर्ञ्यः ॥ १४ ॥**

**चमणोऽञ् ॥ १५ ॥**

**तदस्य तदस्मिन्स्यादिति ॥ १६ ॥**

**परिखाया ढञ् ॥ १७ ॥**

**प्राग्वतेष्ठञ् ॥ १८ ॥**

**आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्[2] ॥ १९ ॥**

१ ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः[3] ।

२ वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः ।

३ आर्हाच्चेद्भोजनादिष्वतिप्रसङ्गः ।

४ उक्तं[4] वा ।

**असमासे निष्कादिभ्यः ॥ २० ॥**

१ निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्तात्प्रतिषेधस्य ।

२ प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि ।

**शताच्च ठन्यतावशते ॥ २१ ॥**

---

१ प. पुस्तके °विकारसमूहतेनकृतेषु इत्यधिकम् । २ प. पुस्तके इतः परमाधिकम् । ऊर्ध्वमानं किलोन्मानम् । परिमाणं तुः सर्वतः । आयामस्तु प्रमाणं स्यात् । संख्या बाह्या तु सर्वतः । भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्चन । ३ प. पुस्तके इतः परमधिकम् । वस्नेवचनात्सिद्धम् । ४ प. पुस्तके नास्ति ।

१ शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः ।

**संख्याया अतिशदन्तायाः कन् ॥२२॥**

१ तिप्रतिषेधाड्डतिग्रहणमिति चेदर्थवद्ग्रहणात्सिद्धम् ।

**वतोरिड्वा ॥ २३ ॥**

**विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ॥ २४ ॥**

**कंसाट्टिठन् ॥ २५ ॥**

१ टिठन्नर्धाच्च ।

२ कार्षापणाद्वा प्रतिषेधश्च ।

**शूर्पादञन्यतरस्याम् ॥ २६ ॥**

**शतमानविंशतिकसहस्रवसनादण् ॥२७॥**

**अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ॥ २८ ॥**

१ [1]द्विगोर्लुक्युक्तम् ।

२ संज्ञाप्रतिषेधानर्थक्यं च तन्निमित्तत्त्वाल्लोपस्य ।

३ उक्तं संख्यात्वे प्रयोजनं तस्मादिहाध्यर्धग्रहणानर्थक्यम् ।

**विभाषा कार्षापणसहस्राभ्याम् ॥ २९ ॥**

१ कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानम् ।

**द्वित्रिपूर्वान्निष्कात् ॥ ३० ॥**

**बिस्ताच्च ॥ ३१ ॥**

१ द्वित्रिभ्यां द्वैयोग्यम् ।

२ तत्र च बहुग्रहणम् ।

**विंशतिकात्खः ॥ ३२ ॥**

**खार्या ईकन् ॥ ३३ ॥**

१ खार्या ईकन्केवलायाश्च ।

२ काकिण्याश्चोपसंख्यानम् ।

३ केवलायाश्च ।

**पणपादमाषशताद्यत् ॥ ३४ ॥**

**शाणाद्वा ॥ ३५ ॥**

१ शतशाणाभ्यां वा ।

२ द्वित्रिपूर्वादण्च ।

**द्वित्रिपूर्वादण् च ॥ ३६ ॥**

**तेन क्रीतम् ॥ ३७ ॥**

१ तेन क्रीतमिति करणात् ।

२ अकर्त्रेकान्तात् ।

३ संख्यैकवचनाद्द्विगोश्चोपसंख्यानम् ।

४ [3]उक्तं वा ।

**तस्य निमित्तं संयोगोत्पातौ ॥ ३८ ॥**

१ तस्यनिमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् ।

२ संनिपाताच्च ।

**गोद्व्यचो ऽसंख्यापरिमाणाश्वादेर्यत् ॥ ३९ ॥**

१ यत्प्रकरणे ब्रह्मवर्चसाच्च ।

**पुत्राच्छ च ॥ ४० ॥**

**सर्वभूमिपृथिवीभ्यामणञौ ॥ ४१ ॥**

**तस्येश्वरः ॥ ४२ ॥**

**तत्रविदित इति च ॥ ४३ ॥**

**लोकसर्वलोकाट्ठञ् ॥ ४४ ॥**

**तस्य वापः ॥ ४५ ॥**

**पात्रात् ष्ठन् ॥ ४६ ॥**

**तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४७ ॥**

१ तदस्मिन्दीयतेऽस्मा इति च ।

१ प. पुस्तके तिग्रहणात् । २–३ प. पुस्तके नास्ति ।

**पूरणार्धाट्ठन् ॥ ४८ ॥**

१ ठन्प्रकरणेऽनन्तादुपसंख्यानम् ।

२ तत्पचतीति द्रोणादण्च ।

**भागाद्यच्च ॥ ४९ ॥**

**तद्धरति वहत्या वहति भाराद्वंशादिभ्यः ॥ ५० ॥**

**वस्नद्रव्याभ्यां ठन्कनौ ॥ ५१ ॥**

**संभवत्यवहरति पचति ॥ ५२ ॥**

१ तत्पचतीति द्रोणादण्च ।

**आढकाचितपात्रात् खो ऽन्यतरस्याम् ॥ ५३ ॥**

**द्विगोः ष्ठंश्च ॥ ५४ ॥**

**कुलिजाल्लुक्खौ च ॥ ५५ ॥**

१ [1]कुलिजाच्चेति सिद्धे लुग्खग्रहणानर्थक्यं पूर्वस्मिन्त्रिकभावात् ।

**सो ऽस्यांशवस्नभृतयः ॥ ५६ ॥**

**तदस्य परिमाणम् ॥ ५७ ॥**

**संख्यायाः संज्ञासंघसूत्राध्ययनेषु । ५८ ।**

१ संज्ञायां स्वार्थे ।

२ ततः परिमाणिनि ।

३ जीवितपरिमाणे चोपसंख्यानम् ।

४ जीवितपरिमाणे चेत्यनर्थकं वचनं कालादिति सिद्धत्वात् ।

५ इह वचने हि लुक्प्रसङ्गः ।

६ अन्येभ्योऽपि दृश्यते खारशताद्यर्थम् ।

७ [2]उक्तं वा ।

८ स्तोमे डविधिः पञ्चदशाद्यर्थः ।

**पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ५९ ॥**

१ विंशत्यादयो दशदर्थे चेत्समासवचनानुपपत्तिः ।

२ परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधानम् ।

३ षष्ठीवचनविधिश्च ।

४ अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु ।

**पञ्चद्दशतौ वर्गे वा ॥ ६० ॥**

**सप्तनो ऽञ् छन्दसि ॥ ६१ ॥**

**त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ॥ ६२ ॥**

**तदर्हति ॥ ६३ ॥**

**छेदादिभ्यो नित्यम् ॥ ६४ ॥**

**शीर्षच्छेदाद्यच्च ॥ ६५ ॥**

**दण्डादिभ्यो यः ॥ ६६ ॥**

**छन्दसि च ॥ ६७ ॥**

१ छेदादिपाथिभ्यो विग्रहदर्शनान्नित्यग्रहणानर्थक्यम् ।

२ विकारार्थमिति चेदकडादिभिस्तुल्यम् ।

**पात्राद्घंश्च ॥ ६८ ॥**

**कडङ्करदक्षिणाच्छ च ॥ ६९ ॥**

**स्थालीबिलात् ॥ ७० ॥**

**यज्ञर्त्विग्भ्यां घखञौ ॥ ७१ ॥**

१ यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् ।

**पारायणतुरायणचान्द्रायणं वर्तयति ॥ ७२ ॥**

१ तद्वर्तयतीत्यनिर्देशस्तत्रादर्शनात् ।

२ इङ्व्यज्योश्च दर्शनात् ।

१–२ प. पुस्तके नास्ति ।

**संशयमापन्नः ॥ ७३ ॥**

**योजनं गच्छति ॥ ७४ ॥**

१ योजनं गच्छतीति क्रोशशतयोजनशतयोरुपसंख्यानम् ।

२ ततोऽभिगमनमर्हतीति च ।

**पथः ष्कन् ॥ ७५ ॥**

**पन्थो ण नित्यम् ॥ ७६ ॥**

**उत्तरपथेनाहृतं च ॥ ७७ ॥**

१ आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम् ।

२ अजपथशङ्कुपथाभ्यां च ।

३ मधुकमरिचयोरण्स्थलात् ।

**कालात् ॥ ७८ ॥**

**तेन निर्वृत्तम् ॥ ७९ ॥**

**तमधीष्टो भृतो भूतो भावी ॥ ८० ॥**

१ अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकस्तत्रादर्शनात् ।

२ सिद्धं तु चतुर्थीनिर्देशात् ।

**मासाद्वयसि यत्खञौ ॥ ८१ ॥**

**द्विगोर्यप् ॥ ८२ ॥**

**षण्मासाण्ण्यच्च ॥ ८३ ॥**

**अवयसि ठंश्च ॥ ८४ ॥**

१ अवयसि ठंश्चेत्यनन्तरस्यानुकर्षः ।

**समायाः खः ॥ ८५ ॥**

**द्विगोर्वा ॥ ८६ ॥**

**रात्र्यहःसंवत्सराच्च ॥ ८७ ॥**

**वर्षाल्लुक् च ॥ ८८ ॥**

**चित्तवति नित्यम् ॥ ८९ ॥**

**षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥ ९० ॥**

१ षष्टिके संज्ञाग्रहणम् ।

२ उक्तं[1] वा ।

**वत्सरान्ताच्छश्छन्दसि ॥ ९१ ॥**

**संपरिपूर्वात्ख च ॥ ९२ ॥**

**तेन परिजय्यलभ्यकार्यसुकरम् ॥ ९३ ॥**

**तदस्य ब्रह्मचर्यम् ॥ ९४ ॥**

१ तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानम् ।

२ तच्चरतीति च ।

३ अवान्तरदीक्षादिभ्यो[2] डिनिः ।

४ अष्टाचत्वारिंशतो ड्वुंश्च ।

५ चातुर्मास्यानां यलोपश्च ।

६ चतुर्मासाण्ण्यो यज्ञे तत्र भवे ।

७ संज्ञायामण् ।

**त[3]स्य दक्षिणा यज्ञाख्येभ्यः ॥ ९५ ॥**

**तत्र च दीयते कार्यं भववत् ॥ ९६ ॥**

१ कार्यग्रहणमनर्थकं तत्रभवेन कृतत्वात् ।

**व्युष्टादिभ्यो ऽण् ॥ ९७ ॥**

१ अण्प्रकरणे ऽग्निपदादिभ्य उपसंख्यानम् ।

**तेन यथाकथाचहस्ताभ्यां णयतौ ॥ ९८ ॥**

**संपादिनि ॥ ९९ ॥**

**कर्मवेषाद्यत् ॥ १०० ॥**

**तस्मै प्रभवति संतापादिभ्यः ॥ १०१ ॥**

**योगाद्यच्च ॥ १०२ ॥**

**कर्मण उकञ् ॥ १०३ ॥**

१ प. पुस्तके नास्ति । २ प. पुस्तके °दीक्षाभ्यो डिनिः । ३ का. बा. प्र. पुस्तकेषु तस्य चेति चकारोऽधिकः

**समयस्तदस्य प्राप्तम् ॥ १०४ ॥**

**ऋतोरण् ॥ १०५ ॥**

**छन्दसि घस् ॥ १०६ ॥**

**कालाद्यत् ॥ १०७ ॥**

**प्रकृष्टे ठञ् ॥ १०८ ॥**

**प्रयोजनम् ॥ १०९ ॥**

**विशाखाषाढादण् मन्थदण्डयोः ॥ ११० ॥**

**अनुप्रवचनादिभ्यश्छः ॥ १११ ॥**

१ छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम् ।

२ स्वर्गादिभ्यो यत् ।

३ पुण्याहवाचनादिभ्यो लुक् ।

**समापनात्सपूर्वपदात् ॥ ११२ ॥**

**ऐकागारिकट् चौरे ॥ ११३ ॥**

१ एकागारान्निपातनानर्थक्यं ठञ्प्रकरणात् ।

**आकालिकडाद्यन्तवचने ॥ ११४ ॥**

१ आकालान्निपातनानर्थक्यं ठञ्प्रकरणात् ।

२ आकालाट्ठंश्च ।

**तेन तुल्यं क्रिया चेद्वतिः ॥ ११५ ॥**

**तत्र तस्येव ॥ ११६ ॥**

**तदर्हम् ॥ ११७ ॥**

**उपसर्गाच्छन्दसि धात्वर्थे ॥ ११८ ॥**

१ स्त्रीपुंसाभ्यां वत्युपसंख्यानम् ।

**तस्य भावस्त्वतलौ ॥ ११९ ॥**

१ स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानम् ।

२ वावचनं च ।

३ अपवादसमावेशाद्वा सिद्धम् ।

४ तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्गः ।

५ सिद्धं तु यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ ।

६ यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने ।

७ [1]उक्तं वा ।

८ त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिध्यर्थम् ।

९ वा छन्दसि ।

१० नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थम् ।

**आ च त्वात् ॥ १२० ॥**

१ आ च त्वादिति चकारकरणमपवादसमावेशार्थम् ।

**न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटबुधकतरसलसेभ्यः ॥ १२१ ॥**

१ न नञ्पूर्वादित्युत्तरस्य प्रतिषेधः ।

**पृथ्वादिभ्य इमनिज्वा ॥ १२२ ॥**

१ पृथ्वादिभ्यो वावचनमण्समावेशार्थम् ।

**वर्णदृढादिभ्यः ष्यञ् च ॥ १२३ ॥**

**गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ १२४ ॥**

१ ब्राह्मणादिषु चातुर्वर्ण्यानामुपसंख्यानम् ।

२ अर्हतो नुम् च ।

**स्तेनाद्यन्नलोपश्च ॥ १२५ ॥**

**सख्युर्यः ॥ १२६ ॥**

**कपिज्ञात्योर्ढक् ॥ १२७ ॥**

**पत्यन्तपुरोहितादिभ्यो यक् ॥ १२८ ॥**

---

१–२ प. पुस्तके नास्ति । ३ बा. क. प्र. नि. वै. पुस्तकेषु बुधस्थाने 'युध' इति ।

**प्राणभृज्जातिवयोवचनोद्गात्रादिभ्यो ऽञ् ॥ १२९ ॥**

**हायनान्तयुवादिभ्यो ऽण् ॥ १३० ॥**

१ अण्प्रकरणे श्रोत्रियस्य घलोपश्च । [1]

**इगन्ताच्च लघुपूर्वात् ॥ १३१ ॥**

**योपधाद्गुरूपोत्तमाद्वुञ् ॥ १३२ ॥**

**द्वन्द्वमनोज्ञादिभ्यश्च ॥ १३३ ॥**

**गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ १३४ ॥**

**होत्राभ्यश्छः ॥ १३५ ॥**

**ब्रह्मणस्त्वः ॥ १३६ ॥**

इति पञ्चमाध्यायस्य प्रथमः पादः ॥

---

**धान्यानां भवने क्षेत्रे खञ् ॥ १ ॥**

**व्रीहिशाल्योर्ढक् ॥ २ ॥**

**यवयवकषष्टिकाद्यत् ॥ ३ ॥**

**विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥**

१ तिलादिभ्यः खञ्च ।

२ उमाभङ्गयोरधान्यत्वात् ।

**सर्वचर्मणः कृतः खखञौ ॥ ५ ॥**

**यथामुखसंमुखस्य दर्शनः खः ॥ ६ ॥**

१ संमुखेति समस्यान्तलोपः ।

**तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ ७ ॥**

**आप्रपदं प्राप्नोति ॥ ८ ॥**

**अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥**

**परोऽवरपरंपरपुत्रपौत्रमनुभवति ॥ १० ॥**

१ परोवरेति परस्योत्ववचनम् ।

२ परपरतराणां परंपरभावः ।

**अवारपारात्यन्तानुकामं गामी ॥ ११ ॥**

**समां समां विजायते ॥ १२ ॥**

१ समां समां विजायत इति यलोपवचनादलुग्विज्ञानम् इति चेदुत्तरपदस्य लुग्वचनम् ।

२ सिद्धं तु पूर्वपदस्य यलोपवचनात् ।

३ अनुप्रत्तावुत्तरपदस्य च वावचनम् ।

**अद्यश्वीनावष्टब्धे ॥ १३ ॥**

**आगवीनः ॥ १४ ॥**

१ गोराङ्पूर्वादा तस्य गोः प्रतिदानात्कारिणि खः ।

**अनुग्वलंगामी ॥ १५ ॥**

**अध्वनो यत्खौ ॥ १६ ॥**

**अभ्यमित्राच्छ च ॥ १७ ॥**

**गोष्ठात् खञ् भूतपूर्वे ॥ १८ ॥**

**अश्वस्यैकाहगमः ॥ १९ ॥**

**शालीनकौपीने अधृष्टाकार्ययोः ॥ २० ॥**

**व्रातेन जीवति ॥ २१ ॥**

**साप्तपदीनं सख्यम् ॥ २२ ॥**

**हैयंगवीनं संज्ञायाम् ॥ २३ ॥**

१ ह्योगोदोहस्य हियङ्ग्वादेशः संज्ञायां तस्य विकारे ।

**तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ २४ ॥**

---

१ प. पुस्तके इतः परमधिकम् । 'सहायाद्वा' इति काशिका ।

**पक्षात्तिः ॥ २५ ॥**

**तेन वित्तश्चुञ्चुप्चणपौ ॥ २६ ॥**

**विनञ्भ्यां नानाञौ न सह ॥ २७ ॥**

**वेः शालच्छङ्कटचौ ॥ २८ ॥**

**संप्रोदश्च कटच् ॥ २९ ॥**

१ कटच्प्रकरणे ऽलाबूतिलोमाभ्यो रजस्युपसंख्यानम् ।

२ भङ्गायाश्च ।

३ गोष्ठादयः स्थानादिषु पशुनामादिभ्यः ।

४ उपमानाद्वा सिद्धम् ।

**अवात् कुटारच् च ॥ ३० ॥**

**नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ॥ ३१ ॥**

**नेर्बिडज्बिरीसचौ ॥ ३२ ॥**

**इनच्पिटच् चिकचि च ॥ ३३ ॥**

१ इनच्पिटच्काश्चिकचिचिकादेशाश्च ।

२ क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी[2] ।

**उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥ ३४ ॥**

**कर्मणि घटो ऽठच् ॥ ३५ ॥**

**तदस्य संजातं तारकादिभ्य इतच् ॥ ३६ ॥**

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः[3][4] ॥ ३७ ॥**

१ वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् ।

**पुरुषहस्तिभ्यामण् च ॥ ३८ ॥**

**यत्तदेतेभ्यः परिमाणे वतुप्[5] ॥ ३९ ॥**

१ वतुप्प्रकरणे युष्मदस्मद्भ्यां सादृश्य उपसंख्यानम् ।

**किमिदम्भ्यां वो घः ॥ ४० ॥**

**किमः संख्यापरिमाणे डति च ॥ ४१ ॥**

**संख्याया अवयवे तयप् ॥ ४२ ॥**

१ अवयवविधानेऽवयविनि प्रत्ययः ।

**द्वित्रिभ्यां तयस्यायज्वा ॥ ४३ ॥**

**उभादुदात्तो नित्यम् ॥ ४४ ॥**

**तदस्मिन्नधिकमिति दशान्ताड्डः[6] ॥ ४५ ॥**

१ डविधाने परिमाणशब्दानामाधिक्यस्याधिकरणाभावादनिर्देशः ।

२ सिद्धं तु पञ्चमीनिर्देशात् ।

**शदन्तविंशतेश्च ॥ ४६ ॥**

१ शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम् ।

२ संख्याग्रहणं च ।

३ विंशतेश्च ।

**संख्याया गुणस्य निमाने मयट् ॥ ४७ ॥**

१ निमाने गुणिनि ।

---

१ प. पुस्तके इतः परमधिकम् । संघाते कटच् । गुणादिभ्यो ग्रामच् का. । कमलादिभ्यः षण्डच् का. । नरकरितुरंगाणां स्कन्धच् का. । पूर्वादिभ्यः काण्डच् वा. । विस्तारे पटच् । द्वित्वे गोयुगच् । षट्त्वे षड्गवच् का. । विकारे स्नेहने तैलच् । भवने क्षेत्रे शाकटशाकिनौ । २ प. पुस्तके इतः परमधिकम् । क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी । चुल् च वक्तव्यः । ३ वै. प्र. बा. नि. क. पुस्तकेषु °ध्नञ्मा° इति पाठः । ४ प. पुस्तके इमानि भाष्यकारवचनानि वार्तिकत्वेन संगृहीतानि । प्रमाणं प्रत्ययार्थो न । तद्वति । अस्येति वर्तनात् । प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम । प्रमाणे लः । द्विगोर्नित्यम् । डट् स्तोमे । शच्छनोर्डिनिः । विंशतेश्च । प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये । ५ प. पुस्तके इतः परमधिकम् । डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते । मात्राद्यप्रतिघाताय । भावः सिद्धश्च डावतोः । ६ प. पुस्तके इतः परमधिकम् । अधिके समानजातौ । इष्टं शतसहस्रयोः । यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम ।

२ भूयसः ।
३ एकोऽन्यतरः ।
४ समानानाम् ।
५ निमेये चापि दृश्यते ।

**तस्य पूरणे डट् ॥ ४८ ॥**
१ तस्य पूरण इत्यतिप्रसङ्गः ।
२ सिद्धं तु संख्यापूरण इति वचनात् ।
३ यस्य वा भावादन्यसंख्यात्वं तत्र ।

**नान्तादसंख्यादेर्मट् ॥ ४९ ॥**
१ मडादिषु यस्यादिस्तन्निर्देशः ।
२ प्रत्ययान्तरे हि स्वरे दोषः ।

**थट् च च्छन्दसि ॥ ५० ॥**

**षट्कतिकतिपयचतुरां थुक् ॥ ५१ ॥**
१ चतुरश्छयतावाद्यक्षरलोपश्च ।
२ थट्थुकोः पृथक्करणं पदान्तविधिप्रतिषेधार्थम् ।

**बहुपूगगणसंघस्य तिथुक् ॥ ५२ ॥**
१ बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः सिद्धा ।
२ पुंवद्वचनं च ।

**वतोरिथुक् ॥ ५३ ॥**

**द्वेस्तीयः ॥ ५४ ॥**

**त्रेः संप्रसारणं च ॥ ५५ ॥**

**विंशत्यादिभ्यस्तमडन्यतरस्याम् ॥५६॥**

**नित्यं शतादिमासार्धमाससंवत्सराच्च ॥ ५७ ॥**

**षष्ट्यादेश्चासंख्यादेः ॥ ५८ ॥**

**मतौ छः सूक्तसाम्नोः ॥ ५९ ॥**
१ छप्रकरणेऽनेकपदादपि ।
२ सिद्धं तु प्रातिपदिकविज्ञानात् ।
३ 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति वचनात् ।
४ आम्नायशब्दानामान्यभाव्यं स्वरवर्णानुपूर्वीदेशकालनियतत्वात् ।
५ पदैकदेशसुब्लोपदर्शनाच्च ।

**अध्यायानुवाकयोर्लुक् ॥ ६० ॥**
१ अध्यायानुवाकाभ्यां वा लुक् ।

**विमुक्तादिभ्यो ऽण् ॥ ६१ ॥**

**गोषदादिभ्यो वुन् ॥ ६२ ॥**

**तत्र कुशलः पथः ॥ ६३ ॥**

**आकर्षादिभ्यः कन् ॥ ६४ ॥**

**धनहिरण्यात्कामे ॥ ६५ ॥**
१ धनहिरण्यात्कामाभिधाने ।
२ षष्ठ्यर्थे ह्यनिष्टप्रसङ्गः ।

**स्वाङ्गेभ्यः प्रसिते ॥ ६६ ॥**

**उदराट्ठगाद्यूने ॥ ६७ ॥**

**सस्येन परिजातः ॥ ६८ ॥**

**अंशं हारी ॥ ६९ ॥**

**तन्त्रादचिरापहृते ॥ ७० ॥**

**ब्राह्मणकोष्णिके संज्ञायाम् ॥ ७१ ॥**

**शीतोष्णाभ्यां कारिणि ॥ ७२ ॥**

**अधिकम् ॥ ७३ ॥**

**अनुकाभिकाभीकः कमिता ॥ ७४ ॥**

**पार्श्वेनान्विच्छति ॥ ७५ ॥**

**अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ७६॥**

**तावतिथं ग्रहणमिति लुग्वा ॥ ७७ ॥**
१ तावतिथं ग्रहणमिति लुग्वावचनानर्थक्यं विभाषाप्रकरणात् ।

२ तावतिथेन गृह्णातीति लुक्च ।

**स एषां ग्रामणीः ॥ ७८ ॥**

**शृङ्खलमस्य बन्धनं करभे ॥ ७९ ॥**

१ शङ्खलमस्य बन्धनं करभ इत्यनिर्देशः ।

२ सिद्धं तु तद्वन्निर्देशाल्लुक्च ।

**उत्क उन्मनाः ॥ ८० ॥**

**कालप्रयोजनाद्रोगे ॥ ८१ ॥**

**तदस्मिन्नन्नं प्राये संज्ञायाम् ॥ ८२ ॥**

१ प्राये संज्ञायां वटकेभ्य इनिः ।

**कुल्माषादञ् ॥ ८३ ॥**

**श्रोत्रियंश्छन्दो ऽधीते ॥ ८४ ॥**

१ श्रोत्रियंश्छन्दोऽधीत इति वाक्यार्थे पदवचनम् ।

२ छन्दसो वा श्रोत्रभावस्तदधीत इति घंश्च ।

**श्राद्धमनेन भुक्तमिनिठनौ ॥ ८५ ॥**

१ इनिठनोः समानकालग्रहणम् ।

२ उक्तं[३] वा ।

**पूर्वादिनिः ॥ ८६ ॥**

**सपूर्वाच्च ॥ ८७ ॥**

**इष्टादिभ्यश्च ॥ ८८ ॥**

**छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ॥ ८९ ॥**

**अनुपद्यन्वेष्टा ॥ ९० ॥**

**साक्षाद्द्रष्टरि संज्ञायाम् ॥ ९१ ॥**

**क्षेत्रियच् परक्षेत्रे चिकित्स्यः ॥ ९२ ॥**

१ क्षेत्रियः श्रोत्रियवत् ।

२ परक्षेत्राद्वा तत्र चिकित्स्य इति परलोपो घश्च ।

**इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ॥ ९३ ॥**

**तदस्यास्त्यस्मिन्निति मतुप् ॥ ९४ ॥**

१ मतुप्प्रभृतयः सन्मात्रे चेदतिप्रसङ्गः[२] ।

२ उक्तं[३] वा ।

३ गुणवचनेभ्यो मतुपो लुक् ।

४ अव्यतिरेकात्सिद्धमिति चेद्दृष्टो व्यतिरेकः ।

५ तथा च लिङ्गवचनसिद्धिः ।

**रसादिभ्यश्च ॥ ९५ ॥**

१ रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम् ।

**प्राणिस्थादातो लजन्यतरस्याम्[४] ॥ ९६ ॥**

**सिध्मादिभ्यश्च ॥ ९७ ॥**

१ लजन्यतरस्यामिति समुच्चयः ।

२ पिच्छादिभ्यस्तुन्दादीनां नानायोगकरणं ज्ञापकमसमावेशस्य ।

३ वस्यचपुनर्वचनं सर्वविभाषार्थम्[५] ।

**वत्सांसाभ्यां कामबले ॥ ९८ ॥**

**फेनादिलच् च ॥ ९९ ॥**

**लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ १०० ॥**

१ नप्रकरणे दद्रा ह्रस्वत्वं च ।

२ विष्वगित्युत्तरपदलोपश्चाकृतसंधेः ।

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । तस्माद्भूमादिग्रहणम् । भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः । ३ प. पुस्तके इतः परमधिकम् । सन्मात्रे चर्षिदर्शनात् । ४ प. पुस्तके इतः परमधिकम् । प्राण्यङ्गादिति वक्तव्यम् । ५ प. पुस्तके चकारो नास्ति ।

**प्रज्ञाश्रद्धार्चाभ्यो णः ॥ १०१ ॥**

१ वृत्तेश्च ।

**तपःसहस्राभ्यां विनीनी ॥ १०२ ॥**

**अण् च ॥ १०३ ॥**

१ तपसो विन्वचनमण्विधानात् ।

२ अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम् ।

**सिकताशर्कराभ्यां च ॥ १०४ ॥**

**देशे लुबिलचौ च ॥ १०५ ॥**

**दन्त उन्नत उरच् ॥ १०६ ॥**

**ऊषसुषिमुष्कमधो रः ॥ १०७ ॥**

१ रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्[1]।

**द्युद्रुभ्यां मः ॥ १०८ ॥**

**केशाद्वो ऽन्यतरस्याम् ॥ १०९ ॥**

१ वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम् ।

२ छन्दसीवनिपौ च ।

३ मेधारथाभ्यामिरनिरचौ[3] ।

**गाण्ड्यजगात्संज्ञायाम् ॥ ११० ॥**

**काण्डाण्डादीरन्नीरचौ ॥ १११ ॥**

**रजःकृष्यासुतिपरिषदो वलच् ॥ ११२ ॥**

१ वलच्प्रकरणे अन्येभ्योऽपि दृश्यते ।

**दन्तशिखात्संज्ञायाम् ॥ ११३ ॥**

**ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वल-गोमिन्मलिनमलीमसाः ॥ ११४ ॥**

**अत इनिठनौ ॥ ११५ ॥**

१ इनिठनोरेकाक्षरात्प्रतिषेधः[4] ।

**व्रीह्यादिभ्यश्च ॥ ११६ ॥**

१ शिखायवखदादिभ्यो नियमस्यावचनं निवर्तकत्वात् ।

**तुन्दादिभ्य इलच् च ॥ ११७ ॥**

**एकगोपूर्वाट्ठञ् नित्यम् ॥ ११८ ॥**

**शतसहस्रान्ताच्च निष्कात् ॥ ११९ ॥**

**रूपादाहतप्रशंसयोर्यप् ॥ १२० ॥**

१ यप्प्रकरणे अन्येभ्योऽपि दृश्यते ।

**अस्मायामेधास्रजो विनिः ॥ १२१ ॥**

**बहुलं छन्दसि ॥ १२२ ॥**

१ छन्दोविन्प्रकरणे ऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्च[5] ।

२ सर्वत्रामयस्य ।

३ शृङ्गवृन्दाभ्यामारकन् ।

४ फलबर्हाभ्यामिनच् ।

५ हृदयाच्चालुरन्यतरस्याम् ।

६ शीतोष्णतृप्रेभ्यस्तन्न सहते ।

७ हिमाच्चेलुः ।

८ बलाच्चोलः ।

९ वातात्समूहे च ।

१० पर्वमरुद्भ्यां तप् ।

११ ददातिवृत्तं वा[1] ।

---

१ वै. का. पुस्तकयोः °र्चावृत्तिभ्य इति पाठः । २ प. पुस्तके इतः परमधिकम् । नगपांसुपाण्डुभ्यश्च काशिका । कच्छ्वा ह्रस्वत्वं च काशिका । ३ प. पुस्तके इतः परमधिकम् । वप्रकरणे अन्येभ्योऽपि दृश्यत इति वक्तव्यम् । ४ प. पुस्तके इतः परमधिकम् । एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ । शिखादिभ्य इनिर्वाच्य इकन्यवखदादिषु । ५ प. पुस्तके इतः परमधिकम् । मर्मणश्चेति वक्तव्यम् ।

**ऊर्णाया युस् ॥ १२३ ॥**

**वाचो ग्मिनिः ॥ १२४ ॥**

**आलजाटचौ बहुभाषिणि[1] ॥ १२५ ॥**

**स्वामिन्नैश्वर्ये ॥ १२६ ॥**

**अर्शआदिभ्यो ऽच् ॥ १२७ ॥**

**द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः॥१२८॥**

**वातातीसाराभ्यां कुक् च[2] ॥ १२९ ॥**

**वयसि पूरणात् ॥ १३० ॥**

**सुखादिभ्यश्च ॥ १३१ ॥**

**धर्मशीलवर्णान्ताच्च ॥ १३२ ॥**

**हस्ताज्जातौ ॥ १३३ ॥**

**वर्णाद्ब्रह्मचारिणि ॥ १३४ ॥**

**पुष्करादिभ्यो देशे ॥ १३५ ॥**

१ इनिप्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानम् ।

२ सर्वादेश्च ।

३ अर्थाच्चासंनिहिते ।

४ तदन्ताच्च ।

**बलादिभ्यो मतुबन्यतरस्याम्॥ १३६ ॥**

**संज्ञायां मन्माभ्याम् ॥ १३७ ॥**

**कंशम्भ्यां बभयुस्तितुतयसः॥ १३८ ॥**

**तुन्दिवलिवटेर्भः ॥ १३९ ॥**

**अहंशुभमोर्युस् ॥ १४० ॥**

॥ इति पञ्चमाध्यायस्य द्वितीयः पादः ॥

---

**प्राग्दिशो विभक्तिः ॥ १ ॥**

१ विभक्तित्वे प्रयोजनमित्प्रतिषेधः ।

२ तौ[3] चोक्तम् ।

३ इदमो विभक्तिस्वरश्च ।

४ त्यदादिविधयश्च ।

**किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यः ॥ २ ॥**

१ बहुग्रहणे संख्याग्रहणम् ।

२ द्व्यादिप्रतिषेधात्किम उपसंख्यानम् ।

**इदम इश् ॥ ३ ॥**

**एतेतौ रथोः ॥ ४ ॥**

**एतदो[4] ऽन् ॥ ५ ॥**

१ एतद इति योगविभागः ।

२ एतदश्च थम उपसंख्यानम् ।

**सर्वस्य सो ऽन्यतरस्यां दि ॥ ६ ॥**

**पञ्चम्यास्तसिल् ॥ ७ ॥**

**तसेश्च ॥ ८ ॥**

१ तसेस्तसिल्वचनं स्वरार्थम् ।

**पर्यभिभ्यां च ॥ ९ ॥**

१ पर्यभिभ्यां च सर्वोभयार्थे ।

**सप्तम्यास्त्रल् ॥ १० ॥**

१ तसिलादयो विभक्त्यादेशाश्चेत्सुब्लुक्स्वरगुणदीर्घैत्त्वौत्त्वसायादिविधिप्रतिषेधः ।

२ पञ्चमीनिर्देशात्सिद्धम् ।

३ अनादेशे स्वार्थविज्ञानात्समानशब्दाप्रतिषेधः ।

**इदमो हः ॥ ११ ॥**

**किमो ऽत् ॥ १२ ॥**

**वा ह च च्छन्दसि ॥ १३ ॥**

**इतराभ्यो ऽपि दृश्यन्ते[5] ॥ १४ ॥**

**सर्वैकान्यकिंयत्तदः काले दा ॥ १५ ॥**

**इदमो हिंल् ॥ १६ ॥**

---

१ प. पुस्तके इतः परमधिकम् । कुत्सित इति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । पिशाचाच्चेति वक्तव्यम् । ३ प. पुस्तके नास्ति । ४ काशिकापुस्तके °दोऽश् इति पाठः । ५ प. पुस्तके इतः परमधिकम् । भवदादियोग इति वक्तव्यम् ।

**अधुना ॥ १७ ॥**

**दानीं च ॥ १८ ॥**

१ दानीमिति निपातनात्स्वरसिद्धिः ।

२ उक्तं वा ।

**तदो दा च ॥ १९ ॥**

१ तदो दावचनमनर्थकं विहितत्वात् ।

**तयोर्दार्हिलौ च च्छन्दसि ॥ २० ॥**

१ तयोरिति प्रातिपदिकनिर्देशः ।

**अनद्यतने र्हिलन्यतरस्याम् ॥ २१ ॥**

**सद्यः परुत् परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २२ ॥**

१ समानस्य सभावो द्यश्चाहनि ।

२ पूर्वपूर्वतरयोः परभाव उदारी च संवत्सरे ।

३ इदमः समसण् ।

४ परस्मादेद्यव्यहनि ।

५ इदमोऽश्भावो द्यश्च ।

६ पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच् ।

७ द्युश्चोभयात् ।

**प्रकारवचने थाल् ॥ २३ ॥**

**इदमस्थमुः ॥ २४ ॥**

**किमश्च ॥ २५ ॥**

**था हेतौ च च्छन्दसि ॥ २६ ॥**

**दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ २७ ॥**

**दक्षिणोत्तराभ्यामतसुच् ॥ २८ ॥**

**विभाषा परावराभ्याम् ॥ २९ ॥**

**अञ्चेर्लुक् ॥ ३० ॥**

**उपर्युपरिष्टात् ॥ ३१ ॥**

१ ऊर्ध्वस्योपभावो रिल्रिष्टातिलौ च ।

**पश्चात् ॥ ३२ ॥**

१ अपरस्य पश्चभावो आतिश्च प्रत्ययः ।

२ दिक्पूर्वपदस्य च ।

३ अर्धोत्तरपदस्य च समासे ।

४ अर्धे च ।

**पश्चा पश्चा च च्छन्दसि ॥ ३३ ॥**

**उत्तराधरदक्षिणादातिः ॥ ३४ ॥**

**एनबन्यतरस्यामदूरे ऽपञ्चम्याः ॥ ३५ ॥**

१ अपञ्चम्या इति प्रागसः ।

**दक्षिणादाच् ॥ ३६ ॥**

**आहि च दूरे ॥ ३७ ॥**

**उत्तराच्च ॥ ३८ ॥**

**पूर्वाधरावराणामसि पुरधवश्चैषाम् । ३९ ।**

**अस्ताति च ॥ ४० ॥**

**विभाषावरस्य ॥ ४१ ॥**

**संख्याया विधार्थे धा ॥ ४२ ॥**

१ धाविधानं धात्वर्थपृथग्भावे ।

**अधिकरणविचाले च ॥ ४३ ॥**

**एकाद्धो ध्यमुञन्यतरस्याम् ॥ ४४ ॥**

१ सहभावे ध्यमुञ् ।

**द्वित्र्योश्च धमुञ् ॥ ४५ ॥**

१ धमुञन्तात्स्वार्थे डदर्शनम् ।

**एधाच् च ॥ ४६ ॥**

**याप्ये पाशप् ॥ ४७ ॥**

---

१ प. पुस्तके नास्ति । २ प. पुस्तके डविधानमिति पाठः ।

१ पाशपि कुत्सितग्रहणम् ।

**पूरणाद्भागे तीयादन् ॥ ४८ ॥**

**प्रागेकादशभ्यो ऽच्छन्दसि ॥ ४९ ॥**

**षष्ठाष्टमाभ्यां ञ च ॥ ५० ॥**

**मानपश्वङ्गयोः कन्लुकौ च ॥ ५१ ॥**

**एकादाकिनिच् चासहाये ॥ ५२ ॥**

१ एकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानम्

२ सिद्धं तु संख्यादेशवचनात् ।

३ असाहयस्य वा ।

**भूतपूर्वे चरट् ॥ ५३ ॥**

**षष्ठ्या रूप्य च ॥ ५४ ॥**

**अतिशायने तमबिष्ठनौ ॥ ५५ ॥**

१ अतिशायने बहुव्रीहावुक्तम् ।

२ शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययविज्ञानम् ।

३ तदन्ताच्च स्वार्थे छन्दसि दर्शनं श्रेष्ठतमायेति ।

**तिङश्च ॥ ५६ ॥**

**द्विवचनविभज्योपपदे तरबीयसुनौ ।५७।**

१ तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसंख्यानम् ।

२ सिद्धं तु गुणप्रधानत्वात् ।

**अजादी गुणवचनादेव ॥ ५८ ॥**

**तुश्छन्दसि ॥ ५९ ॥**

**प्रशस्यस्य श्रः ॥ ६० ॥**

**ज्य च ॥ ६१ ॥**

**वृद्धस्य च ॥ ६२ ॥**

**अन्तिकबाढयोर्नेदसाधौ ॥ ६३ ॥**

**युवाल्पयोः कनन्यतरस्याम् ॥ ६४ ॥**

**विन्मतोर्लुक् ॥ ६५ ॥**

**प्रशंसायां रूपप् ॥ ६६ ॥**

१ प्रकृतेर्लिङ्गवचनाभावात्तिङ्प्रकृतेरम्भाववचनम् ।

२ सिद्धं तु क्रियाप्रधानत्वात् ।

३ वृषलादिभ्य उपसंख्यानम् ।

४ सिद्धं तु प्रकृत्यर्थवैस्पष्ट्यवचनात् ।

**ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥ ६७॥**

१ ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिः ।

२ प्रकृत्यर्थविशेषणत्वात्सिद्धम् ।

३ प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिः ।

४ सिद्धं तु तत्संबंध उत्तरपदार्थे प्रत्ययवचनात् ।

५ क्तान्तात्प्रत्ययविधानानुपपत्तिः क्तस्य भूतकाललक्षणत्वात्कल्पादीनां चासमाप्तिवचनात् ।

६ सिद्धं त्वाशंसायां भूतवद्वचनात् ।

**विभाषा सुपो बहुच् पुरस्तात्तु ॥ ६८ ॥**

१ बहुचि सुब्ग्रहणात्पूर्वत्र तिङो विधानम् ।

२ स्वरः प्रातिपदिकत्वात् ।

३ तुग्रहणं नित्यपूर्वार्थम् ।

४ तमादिभ्यः कल्पादयो विप्रतिषेधेन ।

५ तमादिरिषत्प्रधानात् ।

**प्रकारवचने जातीयर् ॥ ६९ ॥**

---

१ प. पुस्तके नास्ति । २ प. पुस्तके कल्पचादीनामिति पाठः ।

**प्रागिवात् कः ॥ ७० ॥**

**अव्ययसर्वनाम्नामकच् प्राक् टेः ॥ ७१ ॥**[1]

**कस्य च दः ॥ ७२ ॥**

१ अकच्प्रकरणे तूष्णीमः काम् ।

२ शीले को मलोपश्च ।

३ श्नम्बहुजकक्षु नानादेशत्वादुत्सर्गप्रतिषेधः ।

४ कविधेस्तमादयः पूर्वविप्रतिषिद्धम् ।

५ कदाचिच्छिन्नकतरादयः ।

६ एकदेशिप्रधानश्च समासः ।

७ उत्तरपदार्थप्रधानश्च संज्ञायां कन्विध्यर्थम् ।

८ कदाचिद्द्वन्द्वः ।

**अज्ञाते ॥ ७३ ॥**

**कुत्सिते ॥ ७४ ॥**

१ कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिः।

२ कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो यथा टाबादिषु ।

३ सिद्धं तु येन कुत्सितादिवचनं तद्युक्तात्स्वार्थे प्रत्ययविधानात् ।

**संज्ञायां कन् ॥ ७५ ॥**

**अनुकम्पायाम् ॥ ७६ ॥**

**नीतौ च तद्युक्तात् ॥ ७७ ॥**

**बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७८ ॥**

**घनिलचौ च ॥ ७९ ॥**

**प्राचामुपादेरडज्वुचौ च ॥ ८० ॥**

**जातिनाम्नः कन् ॥ ८१ ॥**

**अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥**

**ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३ ॥**

१ ठग्रहणमुको द्वितीयत्वे कविधानार्थम् ।

२ अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः ।

३ द्वितीयादचो लोपे संध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम् ।

**शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥ ८४ ॥**

१ वरुणादीनां च तृतीयात्स चाकृतसंधीनाम् ।

२ षँडिके जश्त्व उक्तम् ।

३ वाचिकादिषु पदवृत्तप्रतिषेधः ।

४ सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात्।

५ षषष्ठाजादिवचनात्सिद्धम् ।

**अल्पे ॥ ८५ ॥**

**ह्रस्वे ॥ ८६ ॥**

**संज्ञायां कन् ॥ ८७ ॥**

**कुटीशमीशुण्डाभ्यो रः ॥ ८८ ॥**

१ कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्वचनम् ।

२ उक्तं[3] वा ।

**कुत्वा डुपच् ॥ ८९ ॥**

**कासूगोणीभ्यां ष्टरच् ॥ ९० ॥**

**वत्सोक्षाश्वर्षभ्यश्च तनुत्वे ॥ ९१ ॥**

१ वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधः ।

---

१ प. पुस्तके इतः परमधिकम् । अनोकारसकारभकारादाविति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । चतुर्थात् । अनजादौ च । लोपः पूर्वपदस्य च । अप्रत्यये तथैवेष्टः । उवर्णाल्ल इलस्य च । ३ प. पुस्तके नास्ति

**चायः की ॥ ३५ ॥**

**अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्रातास्श्रितमाशीराशीर्तः ॥३६॥**

**न संप्रसारणे संप्रसारणम् ॥ ३७ ॥**

१ प्रसारणप्रकरणे पुनः प्रसारणग्रहणमतोऽन्यत्र प्रसारणप्रतिषेधार्थम् ।

२ समानाङ्गग्रहणं च ।

३ तत्रोपोषुषि दोषः ।

४ न वा यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन्प्राप्तिप्रतिषेधात् ।

५ ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि ।

६ रयेर्मतौ बहुलम् ।

७ कक्ष्यायाः संज्ञायाम् ।

**लिटि वयो यः ॥ ३८ ॥**

**वश्चास्यान्यतरस्यां किति ॥ ३९ ॥**

**वेञः ॥ ४० ॥**

**ल्यपि च ॥ ४१ ॥**

**ज्यश्च ॥ ४२ ॥**

**व्यश्च ॥ ४३ ॥**

**विभाषा परेः ॥ ४४ ॥**

**आदेच उपदेशे ऽशिति ॥ ४५ ॥**

१ आत्त्व एश्युपसंख्यानम् ।

२ अशित्येकादेशे प्रतिषेध आदिवत्त्वात् ।

३ प्रत्ययविधिः ।

४ अभ्यासरूपं च ।

५ अयवायावां प्रतिषेधश्च ।

६ शिति प्रतिषेधे श्लुलुकोरुपसंख्यानं रीध्वं त्राध्वं शिशीते ।

७ प्रातिपदिकप्रतिषेधः ।

८ धात्वधिकारात्प्रातिपदिकस्याप्राप्तिः ।

**न व्यो लिटि ॥४६॥**

**स्फुरतिस्फुलत्योर्घञि ॥ ४७ ॥**

**क्रीङ्जीनां णौ ॥ ४८ ॥**

१ आत्त्वे णौ लीयतेरुपसंख्यानं प्रलम्भनशालीनीकरणयोः ।

**सिध्यतेरपारलौकिके ॥ ४९ ॥**

१ सिध्यतेरज्ञानार्थस्य ।

२ इतरथा ह्यनिष्टप्रसङ्गः ।

**मीनातिमिनोतिदीङां ल्यपि च ॥ ५० ॥**

१ मीनात्यादीनामात्त्व उपदेशवचनं प्रत्ययविध्यर्थम् ।

२ निमिमीलियां खलचोः प्रतिषेधः ।

**विभाषा लीयतेः ॥ ५१ ॥**

**खिदेश्छन्दसि ॥ ५२ ॥**

**अपगुरो णमुलि ॥ ५३ ॥**

**चिस्फुरोर्णौ ॥ ५४ ॥**

**प्रजने वीयतेः ॥ ५५ ॥**

**बिभेतेर्हेतुभये ॥ ५६ ॥**

**नित्यं स्मयतेः ॥ ५७ ॥**

**सृजिदृशोर्झल्यमकिति ॥ ५८ ॥**

१ अमि सङ्क्रमणम् ।

२ क्विप्प्रतिषेधार्थम् ।

३ उक्तं वा ।

**अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ५९**

---

१ वै. का. पुस्तकयोः °शीर्ताः । २ इदं वार्तिकं प. पुस्तके नास्ति । ३ प. पुस्तके नास्ति ।

**शीर्षश्छन्दसि ॥ ६० ॥**

१ शीर्षश्छन्दसि प्रकृत्यन्तरम् ।

२ आदेशप्रतिषेधार्थम् ।

**ये च तद्धिते ॥ ६१ ॥**

१ ये च तद्धिते शिरस आदेशार्थम् ।

२ वा केशेषु ।

३ [1]अचि शीर्षः ।

४ छन्दसि च ।

**पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥ ६२ ॥**

१ पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् ।

२ नस्नासिकाया यत्तस्क्षुद्रेषु[2] ।

**धात्वादेः षः सः ॥ ६३ ॥**

१ सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः ।

**णो नः ॥ ६४ ॥**

**लोपो व्योर्वलि ॥ ६५ ॥**

१ व्योर्लोपे क्ावुपसंख्यानम् ।

२ वलोपाप्रसिद्धिरूड्भाववचनात्[3] ।

३ अतिप्रसङ्गो व्रश्चादिषु[4] ।

४ उपदेशसामर्थ्यात्सिद्धामिति चेत्संप्रसारणहलादिशेषेषु सामर्थ्यम् ।

५ न वा बहिरङ्गलक्षणत्वात् ।

६ अनारम्भो वा ।

७ आस्रेमाणं जीरदानुरिति वर्णलोपात् यथा संस्फानो गयस्फानः ।

**वेरपृक्तस्य[5] ॥ ६६ ॥**

१ वेर्लोपे दर्विजागृव्योरप्रतिषेधोऽनुनासिकपरत्वात् ।

२ धात्वन्तस्य चार्थवद्ग्रहणात्[6] ।

३ वस्य वानुनासिकत्वात्सिद्धम् ।

**हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ॥ ६७ ॥**

१ हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावो यथा पचन्निति ।

२ वस्वादिषु दत्वं संयोगादिलोपबलीयस्त्वात् यथा कूटतडिति ।

३ रात्तलोपो नियमवचनात् ।

४ रोरुत्वं च ।

५ न वा संयोगान्तलोपस्योत्वे सिद्धत्वात् यथा हरिवो मेदिनमिति ।

**एङ्ह्रस्वात्संबुद्धेः ॥ ६८ ॥**

१ संबुद्धिलोपे डतरादिभ्यः प्रतिषेधः ।

२ अपृक्ताधिकारस्य निवृत्तत्वात् ।

३ तच्चामर्थम् ।

४ [7]उक्तं वा ।

५ अपृक्तसंबुद्धिलोपाभ्यां लुक् ।

६ न वा लोपलुकोर्लिङ्गवधारणाद्यथानङ्डुह्यत इति ।

**शेश्छन्दसि बहुलम् ॥ ६९ ॥**

**ह्रस्वस्य पिति कृति तुक् ॥ ७० ॥**

---

१ इदं वार्तिकं वै. का. पुस्तकयोः सूत्रत्वेन गृहीतं परं महाभाष्ये वार्तिकेषूपलम्भादस्माभिर्वार्तिकपाठे संगृहीतम् । २ प. पुस्तके इतः परमधिकम् । अवर्णनगरयोरिति वक्तव्यम् । ३ प. पुस्तके °वचनादित्यस्य स्थाने प्रसङ्गात् इति पाठः । ४ प. पुस्तके इतः परमधिकम् । उपदेशसामर्थ्यात्सिद्धम् । ५ प. पुस्तके इतः परमधिकम् । दर्विजागृव्योः प्रतिषेधो वक्तव्यः । ६ प. पुस्तके चार्थवत्त्वादिति । ७ प. पुस्तके नास्ति ।

१ लुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च ।

२ न वा बहिरङ्गलक्षणत्वात् ।

३ ग्रामणिपुत्रादिषु चाप्राप्तिः ।

४ परादौ संयोगादेरित्यतिप्रसङ्गः ।

५ विलोपवचनं च ।

६ इट्प्रतिषेधश्च ।

७ अभक्ते स्वरः ।

**संहितायाम् ॥ ७१ ॥**

**छे च ॥ ७२ ॥**

**आङ्माङोश्च ॥ ७३ ॥**

१ आङ्माङोः सानुबन्धकनिर्देशो गतिकर्मप्रवचनीयप्रतिषेधसंप्रत्ययार्थः ।

**दीर्घात् ॥ ७४ ॥**

**पदान्ताद्वा ॥ ७५ ॥**

१ दीर्घात्पदान्ताद्वा विश्वजनादीनां छन्दसि ।

**इको यणचि[1] ॥ ७६ ॥**

१ यणादेशः प्लुतपूर्वस्य च ।

२ दीर्घशाकलप्रतिषेधार्थम् ।

**एचो ऽयवायावः ॥ ७७ ॥**

**वान्तो यि प्रत्यये ॥ ७८ ॥**

१ वान्तादेशे स्थानिनिर्देशः[2] ।

२ गोर्यूतौ छन्दसि ।

३ अध्वपरिमाणे च ।

**धातोस्तन्निमित्तस्यैव ॥ ७९ ॥**

**क्षय्यजय्यौ शक्यार्थे ॥ ८० ॥**

**क्रय्यस्तदर्थे ॥ ८१ ॥**

**भय्यप्रवय्ये च च्छन्दसि ॥ ८२ ॥**

१ भय्यादिप्रकरणे हृदय्या उपसंख्यानम् ।

२ अव्शरस्य च ।

३ शरुवृत्ताद्वा सिद्धम् ।

४ ऋज्वती शरुरित्यपि दृश्यते ।

५ शरुहस्त इति च लोके ।

**एकः पूर्वपरयोः ॥ ८३ ॥**

१ एकवचनं पृथगादेशप्रतिषेधार्थम् ।

२ न वा द्रव्यवत्कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तेः ।

३ तच्चैकवाक्यभावात् ।

४ तत्रावयवे शास्त्रार्थसंप्रत्ययो यथा लोके ।

५ सिद्धं तु धर्मोपदेशनेऽनवयवविज्ञानाद्यथा लौकिकवैदिकेषु ।

६ पूर्वपरग्रहणं परस्यादेशप्रतिषेधार्थम् ।

७ पञ्चमीनिर्दिष्टाद्धि परस्य ।

८ षष्ठीनिर्दिष्टार्थं तु ।

९ अनिर्दिष्टे हि षष्ठ्यर्थाप्रसिद्धिः ।

**अन्तादिवच्च ॥ ८४ ॥**

१ अन्तादिवद्वचनमामिश्रस्यादेशवचनात् ।

२ तत्र यस्यान्तादिवत्तन्निर्देशः ।

३ सिद्धं तु पूर्वपराधिकारात् ।

४ अन्तवत्त्वे प्रयोजनं बह्वच्पूर्वपदाट्ठज्विधाने ।

---

१ प. पुस्तके इतः परमधिकम् । जश्त्वं न सिद्धं यणमत्र पश्य । यश्चापदान्तो हलचश्च पूर्वः । दीर्घस्य यण् ह्रस्व इति प्रवृत्तं संबन्धवृत्त्या गुणवृद्धिबाध्यः । २ प. पुस्तके इतः परमधिकम् । ओकारौकारयोरिति वक्तव्यम् ।

५ प्रत्ययैकादेशः पूर्वविधौ ।
६ वैभक्तस्य णत्वे ।
७ अदस ईत्त्वोत्वे ।
८ स्वरितत्वं विप्रतिषेधात् ।
९ लिङ्गविशिष्टग्रहणाद्वा ।
१० पूर्वपदान्तोदात्तत्वं च ।
११ एकादेशे हि स्वरिताप्रसिद्धिः ।
१२ कृदन्तप्रकृतिस्वरत्वं च ।
१३ एकादेशे ह्यप्रसिद्धिरुत्तरपदस्यापरत्वात् ।
१४ उत्तरपदवृद्धिश्चैकादेशात् ।
१५ एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात् ।
१६ तत्र वृद्धिविधानम् ।
१७ आदिवत्त्वे प्रयोजनं प्रगृह्यसंज्ञायाम् ।
१८ सुप्तिङाव्विधिषु ।
१९ आङ्ग्रहणे पदविधौ ।
२० आटश्च वृद्धिविधौ ।
२१ कृदन्तप्रातिपदिकत्वे ।
२२ नाभ्यासानीनां ह्रस्वत्वे ।
२३ न वा बहिरङ्गलक्षणत्वात् ।
२४ वर्णाश्रयविधौ च ।
२५ प्रयोजनं खट्वाभिर्जुहावास्या अश्व इति ।
२६ न वाताद्रूप्यातिदेशात् ।

**षत्वतुकोरसिद्धः ॥ ८५ ॥**

१ षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च ।
२ तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात् ।
३ असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः ।
४ तस्मात्स्थानिवद्वचनमसिद्धत्वं च ।
५ स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात्[1] ।
६ संप्रसारणङीट्सु सिद्धः पदान्तपदाद्योरेकादेशस्यासिद्धवचनात्[1] ।

**आद्गुणः ॥ ८६ ॥**

१ गुणे ङिशीटामुपसंख्यानं दीर्घत्वबाधनार्थम्[2] ।
२ न वा बहिरङ्गलक्षणत्वात् ।

**वृद्धिरेचि ॥ ८७ ॥**

**एत्येधत्यूठ्सु ॥ ८८ ॥**

१ इणीकारादौ वृद्धि[3]प्रतिषेधः ।
२ योगविभागात्सिद्धम् ।
३ अक्षादूहिन्याम् ।
४ प्रादूहोढोढ्येषैष्येषु ।
५ स्वादीरेरिणोः ।
६ ऋते च तृतीयासमासे ।
७ प्रवत्सतरकम्बलवसनानां चर्णे ।
८ ऋणदशाभ्यां च ।

**आटश्च ॥ ८९ ॥**

**उपसर्गादृति धातौ ॥ ९० ॥**

१ [4]उपसर्गाद्वृद्धिविधौ क्षातुग्रहण उक्तम् ।
२ छे तुकः संबुद्धिगुणः ।
३ न वा बहिरङ्गलक्षणत्वात् ।

१ प. पुस्तके इतः परमधिकम् । संप्रसारणङीट्सु सिद्धः । २ प. पुस्तके इतः परमधिकम् । आदेकश्चेद् गुणः केन । स्थानेऽन्तरतमो हि रसः । ऐदौतौ नैचि तावुक्तौ । ऋकारो नोभयान्तरः । आकारो नार्ति, धातौ सः । प्लुतश्च विषये स्मृतः । आन्तर्यात्त्रिचतुर्मात्राः । तपरत्वान्नते स्मृताः । ३ प. पुस्तके 'वृद्धि इति नास्ति । ४ प. पुस्तके नास्ति ।

४ संप्रसारणदीर्घत्वण्यल्लोपाभ्यासगुणाद-
यश्च ।

५ यणादेशादाद्गुणः ।

६ इरुर्गुणवृद्धिविधयश्च ।

७ भलोपधातुप्रातिपदिकप्रत्ययसमासान्तो-
दात्तोदा[1]त्तनिवृत्तिस्वरा एकादेशाच्च ।

८ अल्लोपाल्लोपौ चार्धधातुके ।

९ इयङुवङ्गुणवृद्धिटित्किन्मित्पूर्वपदवि-
काराश्च[2] ।

**वा सुप्यापिशलेः ॥ ९१ ॥**

**औतोऽम्शसोः ॥ ९२ ॥**

१ ओतस्तिङि प्रतिषेधः ।

२ गोग्रहणे द्योरुपसंख्यानम् ।

३ समासाच्च प्रतिषेधः ।

४ न वा बहिरङ्गलक्षणत्वात् ।

५ सुबधिकारात्सिद्धम् ।

६ एकयोगे चैकदेशानुवृत्तिरन्यत्रापि ।

७ अभ्युपसंख्यानं वृद्धिबलीयस्त्वात् ।

८ न वानवकाशत्वात् ।

९ द्योश्च सर्वनामस्थाने वृद्धिविधिः ।

१० यद्द्याव इन्द्रेति दर्शनात् ।

**एङि पररूपम् ॥ ९३ ॥**

१ पररूपप्रकरणे तुन्वोर्वि निपात उप-
संख्यानम् ।

२ न वा निपातैकत्वात् ।

३ एवे चानियोगे ।

४ शकन्ध्वा[3]दिषु च ।

५ ओत्वोष्ठयोः समासे वा ।

६ एमन्नादिषु च्छन्दसि ।

**ओमाङोश्च ॥ ९४ ॥**

१ उस्योमाङ्क्ष्वाटः प्रतिषेधः ।

**उस्यपदान्तात् ॥ ९५ ॥**

**अतो गुणे ॥ ९६ ॥**

**अव्यक्तानुकरणस्यात इतौ ॥ ९७ ॥**

१ इतावनेकाज्ग्रहणं श्रदर्थम् ।

**नाम्रेडितस्यान्त्यस्य तु वा ॥ ९८ ॥**

१ नित्यमाम्रेडिते डाचि ।

२ अकारान्तानुकरणाद्वा ।

**अकः सवर्णे दीर्घः ॥ ९९ ॥**

१ सवर्णदीर्घत्व ऋति ॠवावचनम् ।

२ ऌति ॡवावचनम् ।

**प्रथमयोः पूर्वसवर्णः ॥ १०० ॥**

१ प्रथमयोरिति योगविभागः सवर्ण-
दीर्घार्थः ।

२ एकयोगे हि जश्शसोः पररूपप्रसङ्गः ।

३ आद्गुणयणादेशयोरपवादा वृद्धिसवर्ण-
दीर्घपूर्वसवर्णादेशास्तेषां पररूपं स्वर-
संधिषु[5] ।

४ योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्य-
तिप्रसङ्गः ।

---

१ प. पुस्तके °उदात्त° पदं नास्ति । २ प. पुस्तके इतः परमधिकम् । उत्तरपदाधिकाराश्चेति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । सीमन्तः केशेष्विति वक्तव्यम् । ४ इदं वार्तिकं वै. का. पुस्तकयोः सूत्रत्वेन गृहीतम् । महाभाष्ये वार्तिकेषूपलम्भादस्माभिर्वार्तिकत्वेन संगृहीतम् । ५ प. पुस्तके इतः परमधिकम् । योगविभागोऽन्यशास्त्रनिवृत्त्यर्थः ।

५ नकाराभावश्च तस्मादित्यनन्तरनिर्देशात् ।

६ इज्ग्रहणं तु ज्ञापकं पररूपाभावस्य ।

**तस्माच्छसो नः पुंसि[1] ॥ १०१ ॥**

**नादिचि ॥ १०२ ॥**

**दीर्घाज्जसि च ॥ १०३ ॥**

**वा छन्दसि ॥ १०४ ॥**

**अमि पूर्वः[2] ॥ १०५ ॥**

**संप्रसारणाच्च ॥ १०६ ॥**

१ संप्रसारणात्पर[3]पूर्वत्वे समानाङ्गग्रहणमसमानाङ्गप्रतिषेधार्थम् ।

२ सिद्धमसंप्रसारणात् ।

३ कार्यकृतत्वाद्वा ।

४ दीर्घत्वं वचनप्रामाण्यात् ।

५ अन्तवत्त्वाद्वा ।

६ आटो वृद्धेरियङ् ।

७ आङ्गुणात्सवर्णदीर्घत्वमाङभ्यासयोः ।

८ स्वरदोषस्तु ।

९ आङि पररूपवचनं तु ज्ञापकमन्तरङ्गबलीयस्त्वस्य ।

१० प्रयोजनं पूर्वसवर्णपूर्वत्वतहिलोपटेनङेर्यङिसिन्ङिणलैत्वमन्तरङ्गं बहिरङ्गलक्षणाद्वर्णविकारात् ।

**एङः पदान्तादति ॥ १०७ ॥**

**ङसिङसोश्च ॥ १०८ ॥**

**ऋत उत् ॥ १०९ ॥**

**ख्यत्यात्परस्य ॥ ११० ॥**

**अतो रोरप्लुतादप्लुते ॥ १११ ॥**

१ अप्लुतादप्लुतवचनेऽकारहशोः समानपदे प्रतिषेधः ।

२ न वा बहिरङ्गलक्षणत्वात् ।

**हशि च ॥ ११२ ॥**

**[4]नान्तःपादमव्यपरे ॥ ११३ ॥**

१ नान्तःपादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गः ।

२ अकाराश्रयमिति चेदुत्त्ववचनम् ।

३ अयवोः प्रतिषेधश्च ।

४ एङ्प्रकरणात्सिद्धमिति चेदुत्त्वप्रतिषेधः ।

५ पुनरेङ्ग्रहणात्सिद्धम् ।

**अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ ११४ ॥**

**यजुष्युरः ॥ ११५ ॥**

**आपो जुषाणो वृष्णो वर्षिष्ठे ऽम्बेअम्बाले ऽम्बिकेपूर्वे ॥ ११६ ॥**

**अङ्ग इत्यादौ च ॥ ११७ ॥**

**अनुदात्ते च कुधपरे ॥ ११८ ॥**

**अवपथासि च ॥ ११९ ॥**

**सर्वत्र विभाषा गोः ॥ १२० ॥**

**अवङ् स्फोटायनस्य ॥ १२१ ॥**

१ गोरग्वचनं गवाग्रे स्वरसिध्यर्थम् ।

२ अवङादेशे हि स्वरदोषः ।

---

१ प. पुस्तके इतः परमधिकम् । नत्वं पुंसां बहुत्वे चेत्पुंशब्दादिष्यते स्त्रियाम् । नपुंसके तथैवेष्टं स्त्रीशब्दाच्च प्रसज्यते । पुंशब्दादिति चेदिष्टं स्थूरापत्यं न सिध्यति । कुण्डिन्या अररकायाः पुंस्प्राधान्यात्प्रसिध्यति । पुंस्प्राधान्येत एव स्युर्ये दोषाः पूर्वचोदिताः । तस्मादर्थे भवेन्नत्वं वध्रिकादिषु युक्तवत् । २ प. पुस्तके इतः परमधिकम् । वा छन्दसीत्येव । ३ प. पुस्तके पर° इति नास्ति । ४ बै. का. बा. प्र. क. नि. पुस्तकेषु प्रकृत्यान्तः° इति ।

**इन्द्रे च**[1] **॥ १२२ ॥**

**प्लुतप्रगृह्या अचि नित्यम्**[2] **॥ १२३ ॥**

१ प्लुतप्रगृह्येष्वग्रहणमनर्थकमधिकारात्-सिद्धम् ।

२ तत्तु तस्मिन्प्रकृतिभावार्थम् ।

३ प्लुतप्रकृतिभाववचनं तु ज्ञापकमेकादेशात्प्लुतो विप्रतिषेधेनेति ।

४ एकादशात्प्लुतो विप्रतिषेधेनेति चेच्छाले-न्द्रेऽतिप्रसङ्गः ।

५ न वा बहिरङ्गलक्षणत्वात् ।

**आङो ऽनुनासिकश्छन्दसि ॥ १२४ ॥**

१ आङोऽनर्थकस्य ।

**इको ऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥१२५॥**

१ सिन्नित्यसमासयोः शाकलप्रतिषेधः ।

२ ईषा अक्षादिषु च्छन्दसि प्रकृतिभाव-मात्रम्[3] ।

**ऋत्यकः ॥ १२६ ॥**

१ ऋत्यकः सवर्णार्थम् ।

२ अनिगन्तार्थं च ।

३ ऋति ह्रस्वादुपसर्गाद्वृद्धिर्विप्रतिषेधेन ।

**अप्लुतवदुपस्थिते ॥ १२७ ॥**

१ वद्वचनं प्लुतकार्यप्रतिषेधार्थम् ।

२ प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेध-प्रसङ्गोऽन्येन विहितत्वात् ।

**ई३ चाक्रवर्मणस्य**[4] **॥ १२८ ॥**

१ ई३चाक्रवर्मणस्येत्यनुपस्थितार्थम् ।

**दिव उत् ॥ १२९ ॥**

**एतत्तदोः सुलोपो ऽकोरनञ्समासे हलि ॥ १३० ॥**

**स्यश्छन्दसि बहुलम् ॥ १३१ ॥**

**सो ऽचि लोपे चेत्पादपूरणम् ॥ १३२ ॥**

**[ सुट्कात्पूर्वः**[5] **]**

**( अडभ्याव्यवायेऽपि )**

१ सुटि कात्पूर्ववचनमककारादौ कात्पूर्वा-र्थमिति चेदन्तरेणापि तत्सिद्धम्[6] ।

२ द्विर्वचनात्सुड्विप्रतिषेधेनेति चेत् द्विर्भूते शब्दान्तरभावात्पुनःप्रसङ्गः ।

३ द्विर्भूते शब्दान्तरभावात्पुनःप्रसङ्ग इति चेद्द्विर्वचनम् ।

४ तथा चानवस्था ।

५ अड्व्यवाय उपसंख्यानम् ।

६ अभ्यासव्यवाये च ।

७ अविप्रतिषेधो वा बहिरङ्गलक्षणत्वात् ।

८ उपदेशिवद्वचनं च ।

९ लिटिगुणचङिदीर्घप्रतिषेधार्थम् ।

१० कात्पूर्वान्त इति चेद्द्रुविधि प्रतिषेधः ।

---

१ वै. का. क. प्र. पुस्तकेष्वत्र नित्यमित्यधिकम् । प. पुस्तके इतः परमधिकम् । इन्द्रादाविति वक्तव्यम् । २ वै. का. क. प्र. पुस्तकेष्वत्र नित्यमिति नास्ति । ३ प. पुस्तके °मात्रमित्यस्य स्थाने °वचन-मिति पाठः । ४ इदं भाष्ये खण्डितं सूत्रम् । प. पुस्तके इतः परमधिकम् । सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थम् । अडभ्यासव्ययायेऽपीति विकृतवार्तिकम् । तदत्र सूते भाष्ये 'अड्व्नवाय उपसंख्यानम् । अभ्यास-व्यवाये च' इति वार्तिकयोरूपलभ्यते । अस्माभिर्भाष्यानुसारं तद्वयं वार्तिकपाठे संगृहीतम् । परं वै. का. पुस्तकयोः सूत्रत्वेन गृहीतम् । ६ प. पुस्तके इतः परमधिकम् । द्विर्वचनात् सुड्विप्रतिषेधेन ।

११ परादाविड्गुणप्रसङ्गः ।

१२ अभक्ते स्वरः ।

**संपर्युपेभ्यः करोतौ भूषणे ॥ १३३ ॥**

**समवाये च ॥ १३४ ॥**

**उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ १३५ ॥**

**किरतौ लवने ॥ १३६ ॥**

**हिंसायां प्रतेश्च ॥ १३७ ॥**

**अपाच्चतुष्पाच्छकुनिष्वालेखने ॥ १३८ ॥**

१ किरतेर्हर्षजीविकाकुलायकरणेषु ।

**कुस्तुम्बुरूणि जातौ ॥ १३९ ॥**

**अपरस्पराः क्रियासातत्ये ॥ १४० ॥**

१ समो हिततततयोर्वा लोपः ।

२ सन्तुमुनोः कामे ।

३ अवश्यमः कृत्ये ।

**गोष्पदं सेवितासेवितप्रमाणेषु ॥ १४१ ॥**

**आस्पदं प्रतिष्ठायाम् ॥ १४२ ॥**

**आश्चर्यमनित्ये ॥ १४३ ॥**

१ आश्चर्यमद्भुते ।

**वर्चस्के ऽवस्करः ॥ १४४ ॥**

**अपस्करो रथाङ्गम् ॥ १४५ ॥**

**विष्किरः शकुनौ वा ॥ १४६ ॥**[1]

१ विष्किरः शकुनौ विकिरो वा ।[2]

**ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ १४७ ॥**

**प्रतिष्कशश्च कशेः ॥ १४८ ॥**

**प्रस्कण्वहरिश्चन्द्रावृषी ॥ १४९ ॥**

**मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ १५० ॥**

**कास्तीराजस्तुन्दे नगरे ॥ १५१**

**कारस्करो वृक्षः ॥ १५२ ॥**

**पारस्करप्रभृतीनि च संज्ञायाम्[3] ॥ १५३ ॥**

**अनुदात्तं पदमेकवर्जम्[4] ॥ १५४ ॥**

१ अनुदात्ते विप्रतिषेधानुपपत्तिरेकास्मिन्युगपत्संभवात् ।

२ सिद्धं तु एकाननुदात्तत्वात् ।

३ एकवर्जमिति चाप्रसिद्धिः संदेहात् ।

४ सिद्धं तु यस्मिन्ननुदात्त उदात्तवचनानर्थक्यं तद्वर्जम् ।

५ प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धिः ।

६ विप्रतिषेधात्प्रत्ययस्वर इति चेत्काम्यादिषु चित्करणम् ।

७ प्रकृतिस्वरे प्रत्ययस्वराभावः ।

८ सिद्धं तु प्रकृतिस्वरबलीयस्त्वात्प्रत्ययस्वरभावः ।

९ सतिशिष्टस्वरबलीयस्त्वं च ।

१० तच्चानेकप्रत्ययसमासार्थम् ।

११ स्यादिस्वराप्रसङ्गश्च तासेः परस्यानुदात्तवचनात् ।

१२ शास्त्रपरविप्रतिषेधानियमाद्वा शब्दपरविप्रतिषेधात् सिद्धम् ।

---

१ प. पुस्तके इतः परमधिकम् । मनसि च । २ बो. पुस्तके शकुनिर्वेति पाठः । वै. का. क. पुस्तकेषु विष्किरः शकुनिर्विकिरो वेति पाठः । ३ प. पुस्तके इतः परमधिकम् । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्च । प्रायस्य चित्तिचित्तयोः सुडस्कारो वा । ४ प. पुस्तके इतः परमधिकं वार्तिकत्वेन । आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः । यौगपद्यं तवै सिद्धं पर्यायो रिक्तशासनात् । उदात्ते ज्ञापकं त्वेतत् स्वरितेन समाविशेत् ।

१३ विभक्तिस्वरान्नञ्स्वरो बलीयान् ।

१४ विभक्तिनिमित्तस्वराच्च ।

१५ यच्चोपपदं कृति नञ् ।

१६ सहनिर्दिष्टस्य च ।

**कर्षात्वतो घञो ऽन्त उदात्तः ॥१५५॥**

**उञ्छादीनां च ॥१५६॥**

**अनुदात्तस्य च यत्रोदात्तलोपः ॥१५७॥**

१ उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणानर्थक्यम् ।

२ अन्त इति चेच्श्वम्क्सयुष्मदस्मदिदंकिंलोपेषु स्वरः ।

३ आदिरिति चेदिन्धीत द्व्यमित्यन्तः ।

४ आदौ सिद्धम् ।

५ विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तप्रतिषेधाल्लिङि सिद्धम् ।

६ अयचि चित्करणात् ।

**धातोः ॥ १५८ ॥**

१ धातोरन्त इति चेदनुदात्तेचबग्रहणम् ।

२ संश्च नित् ।

३ आदावूर्णुप्रत्ययधातुष्वन्तोदात्तत्वम् ।

४ अन्तोदात्तवचनात्सिद्धम् ।

५ पिबौ निपातनात् ।

**चितः ॥ १५९ ॥**

१ चितः सप्रकृतेर्बह्वकजर्थम् ।

**तद्धितस्य ॥ १६० ॥**

**कितः ॥ १६१ ॥**

**तिसृभ्यो जसः ॥ १६२ ॥**

१ तिसृभ्यो जस्ग्रहणानर्थक्यमन्यत्राभावात् ।

**चतुरः शसि ॥ १६३ ॥**

१ चतुरः शसि स्त्रियामप्रतिषेध आद्युदात्तनिपातनात् ।

२ विभक्तिस्वरभावश्च हलादिग्रहणात् ।

३ आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम् ।

**सावेकाचस्तृतीयादिर्विभक्तिः ॥१६४॥**

१ सावेकाच उदात्तत्वे त्वन्मदोः प्रतिषेधः ।

२ सिद्धं तु यस्मात्तृतीयादिस्तस्याभावात्सौ ।

३ प्रकृतेश्चानेकाच्त्वात् ।

**अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ १६५ ॥**

**अष्टेश्छन्दस्यसर्वनामस्थानम् ॥ १६६ ॥**

**ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥ १६७ ॥**

१ ऊठ्युपधाग्रहणमन्त्यप्रतिषेधार्थम् ।

**अष्टनो दीर्घात् ॥ १६८ ॥**

१ अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम् ।

**शतुरनुमो नद्यजादी ॥ १६९ ॥**

१ नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानम् ।

**उदात्तयणो हल्पूर्वात् ॥ १७० ॥**

१ उदात्तयणि हल्ग्रहणं नकारान्तार्थम् ।

२ हल्पूर्वग्रहणानर्थक्यं च समुदायादेशत्वात् ।

३ स्वरितत्वे चावचनात् ।

**नोङ्धात्वोः ॥ १७१ ॥**

**ह्रस्वनुड्भ्यां मतुप् ॥ १७२ ॥**

१ मतुबुदात्तत्वे रेग्रहणम् ।

२ त्रिप्रतिषेधश्च ।

**नामन्यतरस्याम् ॥ १७३ ॥**

१ नाम्स्वरे मतौ ह्रस्वग्रहणम् ।

**ङ्याश्छन्दसि बहुलम् ॥ १७४ ॥**

**षट्त्रिचतुर्भ्यो हलादिः ॥ १७५ ॥**

**झल्युपोत्तमम् ॥ १७६ ॥**

**विभाषा भाषायाम् ॥ १७७ ॥**

**न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥ १७८ ॥**

**दिवो झल् ॥ १७९ ॥**

**नृ चान्यतरस्याम् ॥ १८० ॥**

**तित् स्वरितम् ॥ १८१ ॥**

१ तिति प्रत्ययग्रहणम् ।

**तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ १८२ ॥**

१ तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तासिजर्थः ।

२ चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन ।

३ मुकश्चोपसंख्यानम् ।

४ इतश्चोपसंख्यानम् ।

५ इतश्चानेकान्तत्वात् ।

६ तत्रादिप्रभृतिजुहोत्यादिभ्योऽप्रतिषेधः स्थान्यादेशाभावात् ।

७ अनुदात्तङिद्ग्रहणाद्वा ।

८ ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः सर्वस्योपदेशविशेषणत्वात् ।

**आदिः सिचो ऽन्यतरस्याम् ॥ १८३ ॥**

१ सिच आद्युदात्तत्वे ऽनिटः पित उपसंख्यानम् ।

**स्वपादिर्हिंसामच्यनिटि ॥ १८४ ॥**

१ स्वपादीनां वावचनादभ्यस्तस्वरो विप्रतिषेधेन ।

**अभ्यस्तानामादिः ॥ १८५ ॥**

**अनुदात्ते च ॥ १८६ ॥**

१ अनुदात्ते चेति बहुव्रीहिनिर्देशो लोपयणादेशार्थः ।

**सर्वस्य सुपि ॥ १८७ ॥**

१ सर्वस्वरोऽनच्कस्य ।

**भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ॥ १८८ ॥**

**लिति ॥ १८९ ॥**

**आदिर्णमुल्यन्यतरस्याम् ॥ १९० ॥**

**अचः कर्तृयकि ॥ १९१ ॥**

१ यकि रपर उपसंख्यानम् ।

२ उपदेशवचनात्सिद्धम् ।

३ उपदेशवचने जनादीनाम् ।

४ योगविभागात्सिद्धम् ।

**थलि च सेटीडन्तो वा ॥ १९२ ॥**

**ञ्नित्यादिर्नित्यम् ॥ १९३ ॥**

**आमन्त्रितस्य च ॥ १९४ ॥**

**पथिमथोः सर्वनामस्थाने ॥ १९५ ॥**

**अन्तश्च तवै युगपत् ॥ १९६ ॥**

**क्षयो निवासे ॥ १९७ ॥**

१ प. पुस्तके इतः परमधिकम् । ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः ।

जयः करणम् ॥ १९८ ॥
वृषादीनां च ॥ १९९ ॥
संज्ञायामुपमानम् ॥ २०० ॥
१ उपमानस्याद्युदात्तवचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्य ।
निष्ठा च द्व्यजनात् ॥ २०१ ॥
१ निष्ठायां यञि दीर्घत्वे प्रतिषेधः ।
२ न वा बहिरङ्गलक्षणत्वात् ।
शुष्कधृष्टौ ॥ २०२ ॥
आशितः कर्ता ॥ २०३ ॥
१ आशिते कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वं च ।
रिक्ते विभाषा ॥ २०४ ॥
१ वेणुरिक्तयोरप्राप्ते ।
जुष्टार्पिते च च्छन्दसि ॥ २०५ ॥
नित्यं मन्त्रे ॥ २०६ ॥
युष्मदस्मदोर्ङसि ॥ २०७ ॥
ङयि च ॥ २०८ ॥
यतो ऽनावः ॥ २०९ ॥
ईडवन्दवृशंसदुहां ण्यतः ॥ २१० ॥
विभाषा वेण्विन्धानयोः ॥ २११ ॥
त्यागरागहासकुहश्वठक्रथानाम्[1] । २१२ ।
उपोत्तमं रिति ॥ २१३ ॥
चङ्यन्यतरस्याम् ॥ २१४ ॥
मतोः पूर्वमात् संज्ञायां स्त्रियाम् ।२१५।
अन्तो ऽवत्याः ॥ २१६ ॥
ईवत्याः ॥ २१७ ॥
चौ ॥ २१८ ॥
१ चोरतद्धिते ।
समासस्य ॥ २१९ ॥
१ समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानम् ।
२ हल्स्वरप्राप्तौ वा व्यञ्जनमविद्यमानवत् ।
३ प्रयोजनं लिदाद्युदात्तान्तोदात्तविधयः ।

॥ इति षष्ठाध्यायस्य प्रथमः पादः ॥

---

बहुव्रीहौ प्रकृत्या पूर्वपदम्[2] ॥ १ ॥
तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ २ ॥
१ तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधः ।
२ सिद्धं तु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् ।
३ अव्यये नञ्कुनिपातानाम् ।
४ क्त्वायां वा प्रतिषेधः ।
५ निपातनात्सिद्धम् ।
वर्णो वर्णेष्वनेते ॥ ३ ॥
गाधलवणयोः प्रमाणे ॥ ४ ॥
दायाद्यं दायादे ॥ ५ ॥

---

१ बो. °कुथानाम् । २ प. पुस्तके इतः परमधिकम् । बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृत् । नञ्सुभ्यां नियमार्थं तु परस्य शिति शासनात् । क्षेपेविधिर्नञोऽसिद्धः परस्य नियमो भवेत् । अन्तश्च वाप्रिये सिद्धः । संभवात् । प्रकृताद्विधेः । बहुव्रीहावृते सिद्धम् । इष्टश्चावधारणम् । द्विपाद्दिष्टेर्वितस्तेश्च । उदात्ते ज्ञापकं त्वेतत् । स्वरितेन समाविशेत् ।

प्रतिबन्धि चिरकृच्छ्रयोः ॥ ६ ॥
पदे ऽपदेशे ॥ ७ ॥
निवाते वातत्राणे ॥ ८ ॥
शारदे ऽनार्तवे ॥ ९ ॥
अध्वर्युकषाययोर्जातौ ॥ १० ॥
सदृशप्रतिरूपयोः सादृश्ये ॥ ११ ॥

१ सदृशग्रहणमनर्थकं तृतीयासमासवचनात्[1] ।

२ षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् ।

द्विगौ प्रमाणे ॥ १२ ॥
गन्तव्यपण्यं वाणिजे ॥ १३ ॥
मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥ १४ ॥
सुखप्रिययोर्हिते ॥ १५ ॥
प्रीतौ च ॥ १६ ॥
स्वं स्वामिनि ॥ १७ ॥
पत्यावैश्वर्ये ॥ १८ ॥
न भूवाक्चिद्दिधिषु ॥ १९ ॥
वा भुवनम् ॥ २० ॥
आशङ्काबाधनेदीयस्सु संभावने ॥ २१ ॥
पूर्वे भूतपूर्वे ॥ २२ ॥
सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ॥ २३ ॥
विस्पष्टादीनि गुणवचनेषु ॥ २४ ॥
श्रज्यावमकन्पापवत्सु भावे कर्मधारये ॥ २५ ॥
कुमारश्च ॥ २६ ॥
आदिः प्रत्येनसि ॥ २७ ॥
पूगेष्वन्यतरस्याम् ॥ २८ ॥
इगन्तकालकपालभगालशरावेषु द्विगौ ॥ २९ ॥

१ इगन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसंख्यानम् ।

२ न वा बहिरङ्गलक्षणत्वात् ।

बह्वन्यतरस्याम् ॥ ३० ॥
दिष्टिवितस्त्योश्च ॥ ३१ ॥
सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ॥ ३२ ॥
परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ३३ ॥

१ परिप्रत्युपापेभ्यो वनं समासे विप्रतिषेधेन।

२ न वा वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् ।

राजन्यबहुवचनद्वन्द्वे ऽन्धकवृष्णिषु ।३४
संख्या ॥ ३५ ॥
आचार्योपसर्जनश्चान्तेवासी ॥ ३६ ॥

१ आचार्योपसर्जनेऽनेकस्यापि पूर्वपदत्वात्संदेहः ।

२ लोकविज्ञानात्सिद्धम् ।

कार्तकौजपादयश्च ॥ ३७ ॥
महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ॥ ३८ ॥
क्षुल्लकश्च वैश्वदेवे ॥ ३९ ॥
उष्ट्रः सादिवाम्योः ॥ ४० ॥
गौः सादसादिसारथिषु ॥ ४१ ॥

१ प. पुस्तके °ग्रहणमिति नास्ति ।

कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥ ४२ ॥

१ कुरुवृज्योर्गार्हपते ।

२ पण्यकम्बलः संज्ञायाम् ।

चतुर्थी तदर्थे ॥ ४३ ॥

अर्थे ॥ ४४ ॥

क्ते च ॥ ४५ ॥

कर्मधारये ऽनिष्ठा ॥ ४६ ॥

अहीने द्वितीया ॥ ४७ ॥

१ अहीने द्वितीयानुपसर्गे ।

तृतीया कर्मणि ॥ ४८ ॥

गतिरनन्तरः ॥ ४९ ॥

१ गतेरनन्तरग्रहणमनर्थकं गतिर्गतावनुदात्तवचनात् ।

२ तत्र यस्याप्रकृतिस्वरत्वं तस्मादन्तोदात्तप्रसङ्गः ।

३ प्रकृतिस्वरवचनाद्ध्यनन्तोदात्तत्वम् ।

४ प्रकृतिस्वरवचनं किमर्थमिति चेदेकगत्यर्थम् ।

५ अपूर्वपदार्थमिति चेत्कारकेऽतिप्रसङ्गः ।

६ सिद्धं तु गतेरन्तोदात्ताप्रसङ्गात् ।

तादौ च निति कृत्यतौ ॥ ५० ॥

१ तादौ निति कृद्ग्रहणानर्थक्यम् ।

२ कृदुपदेशे वा ताद्यर्थमिडर्थम् ।

तवै चान्तश्च युगपत् ॥ ५१ ॥

अनिगन्तो ऽञ्चतौ वप्रत्यये ॥ ५२ ॥

१ अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावप्रसङ्गः

२ अनिगन्तवचनं किमर्थमिति चेद्यगादिष्टार्थम् ।

३ उक्तं[1] वा ।

४ चोरनिगन्तोऽञ्चतौ वप्रत्यये ।

५ न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवादः ।

६ विभक्तीषत्स्वरात्कृत्स्वरः ।

७ चित्स्वराद्धारिस्वरः ।

८ कृत्स्वराच्च ।

९ न वा हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य ।

१० युक्तस्वरश्च ।

न्यधी च ॥ ५३ ॥

ईषदन्यतरस्याम् ॥ ५४ ॥

हिरण्यपरिमाणं धने ॥ ५५ ॥

प्रथमो ऽचिरोपसंपत्तौ ॥ ५६ ॥

कतरकतमौ कर्मधारये ॥ ५७ ॥

आर्यो ब्राह्मणकुमारयोः ॥ ५८ ॥

राजा च ॥ ५९ ॥

षष्ठी प्रत्येनासि ॥ ६० ॥

क्ते नित्यार्थे ॥ ६१ ॥

ग्रामः शिल्पिनि ॥ ६२ ॥

राजा च प्रशंसायाम् ॥ ६३ ॥

आदिरुदात्तः ॥ ६४ ॥

सप्तमीहारिणौ धर्म्ये ऽहरणे ॥ ६५ ॥

युक्ते च ॥ ६६ ॥

१ प. पुस्तके नास्ति ।

विभाषाध्यक्षे ॥ ६७ ॥
पापं च शिल्पिनि ॥ ६८ ॥
गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ।६९।
अङ्गानि मैरेये ॥ ७० ॥
भक्ताख्यास्तदर्थेषु ॥ ७१ ॥
गोबिडालसिंहसैन्धवेषूपमाने ॥ ७२ ॥
अके जीविकार्थे ॥ ७३ ॥
प्राचां क्रीडायाम् ॥ ७४ ॥
अणि नियुक्ते ॥ ७५ ॥
शिल्पिनि चाकृञः ॥ ७६ ॥
संज्ञायां च ॥ ७७ ॥
गोतन्तियवं पाले ॥ ७८ ॥
णिनि ॥ ७९ ॥
उपमानं शब्दार्थप्रकृतावेव ॥ ८० ॥
युक्तारोह्यादयश्च ॥ ८१ ॥
दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ ८२ ॥
१ जे दीर्घाद्बह्वचः ।
अन्त्यात्पूर्वं बह्वचः ॥ ८३ ॥
ग्रामे ऽनिवसन्तः ॥ ८४ ॥
घोषादिषु च ॥ ८५ ॥
छात्र्यादयः शालायाम् ॥ ८६ ॥
प्रस्थे ऽवृद्धमकर्क्यादीनाम् ॥ ८७ ॥
मालादीनां च ॥ ८८ ॥
अमहन्नवं नगरे ऽनुदीचाम् ॥ ८९ ॥
अर्मे चावर्णं द्व्यच्त्र्यच् ॥ ९० ॥
न भूताधिकसंजीवमद्राश्मकज्जलम् ।९१।
१ आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् ।
अन्तः ॥ ९२ ॥
सर्वं गुणकार्त्स्न्ये ॥ ९३ ॥
१ गुणात्तरेण समासस्तरलोपश्च ।
संज्ञायां गिरिनिकाययोः ॥ ९४ ॥
कुमार्यां वयसि ॥ ९५ ॥
उदके ऽकेवले ॥ ९६ ॥
द्विगौ क्रतौ ॥ ९७ ॥
सभायां नपुंसके ॥ ९८ ॥
पुरे प्राचाम् ॥ ९९ ॥
अरिष्टगौडपूर्वे च ॥ १०० ॥
न हास्तिनफलकमार्देयाः ॥ १०१ ॥
कुसूलकूपकुम्भशालं बिले ॥ १०२ ॥
दिक्छब्दा ग्रामजनपदाख्यानचानराटेषु ॥ १०३ ॥
आचार्योपसर्जनश्चान्तेवासिनि ॥ १०४ ॥
उत्तरपदवृद्धौ सर्वं च ॥ १०५ ॥
बहुव्रीहौ विश्वं संज्ञायाम् ॥ १०६ ॥
१ बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्तः ।
२ अन्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसंख्यानम् ।
उदराश्वेषुषु ॥ १०७ ॥
क्षेपे ॥ १०८ ॥
१ उदरादिभ्यो नञ्सुभ्याम् ।
नदी बन्धुनि ॥ १०९ ॥
निष्ठोपसर्गपूर्वमन्यतरस्याम् ॥ ११० ॥
उत्तरपदादिः ॥ १११ ॥
कर्णो वर्णलक्षणात् ॥ ११२ ॥
संज्ञौपम्ययोश्च ॥ ११३ ॥
कण्ठपृष्ठग्रीवाजङ्घं च ॥ ११४ ॥

शृङ्गमवस्थायां च ॥ ११५ ॥
नञो जरमरमित्रमृताः ॥ ११६ ॥
सोर्मनसी अलोमोषसी ॥ ११७ ॥
१ सोर्मनसोः कपि ।
क्रत्वादयश्च ॥ ११८ ॥
आद्युदात्तं द्व्यच् छन्दसि ॥ ११९ ॥
वीरवीर्यौ च ॥ १२० ॥
कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ १२१ ॥
१ पर्यादिभ्यः कूलादीनामाद्युदात्तत्वम् ।
कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ॥ १२२॥
तत्पुरुषे शालायां नपुंसके ॥ १२३ ॥
कन्था च ॥ १२४ ॥
आदिश्चिहणादीनाम् ॥ १२५ ॥
चेलखेटकटुककाण्डं गर्हायाम् ॥ १२६ ॥
चीरमुपमानम् ॥ १२७ ॥
पललसूपशाकं मिश्रे ॥ १२८ ॥
कूलसूदस्थलकर्षाः संज्ञायाम् ॥ १२९ ॥
अकर्मधारये राज्यम् ॥ १३० ॥
१ चेलराज्यादिभ्योऽव्ययम् ।
वर्ग्यादयश्च ॥ १३१ ॥
पुत्रः पुम्भ्यः ॥ १३२ ॥
नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ १३३ ॥
चूर्णादीन्यप्राणिषष्ठ्याः॥ १३४ ॥
षट् च काण्डादीनि ॥ १३५ ॥
कुण्डं वनम् ॥ १३६ ॥
१ कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम् ।
प्रकृत्या भगालम् ॥ १३७ ॥
शितेर्नित्याबह्वज्बहुव्रीहावभसत् ॥१३८॥
गतिकारकोपपदात्कृत् ॥ १३९ ॥
१ गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावात् ।
२ कृत्प्रकृतौ वा[1] गतित्वादधिकार्थं कृद्ग्रहणम् ।
उभे वनस्पत्यादिषु युगपत् ॥ १४० ॥
देवताद्वन्द्वे च ॥ १४१ ॥
नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥ १४२ ॥
अन्तः ॥ १४३ ॥
१ अन्तोदात्तत्वं समासस्येति चेत्कप्युपसंख्यानम् ।
२ उत्तरपदा[2]न्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वम् ।
३ न वा कपि पूर्ववचनं ज्ञापकमुत्तरपदान्तोदात्तत्वस्य ।
४ प्रकरणाच्च समासान्तोदा[3]त्तत्वम् ।
थाथघञ्क्ताजबित्रकाणाम् ॥ १४४ ॥
सूपमानात् क्तः ॥ १४५ ॥
संज्ञायामनाचितादीनाम् ॥ १४६ ॥
प्रवृद्धादीनां च ॥ १४७ ॥
कारकाद्दत्तश्रुतयोरेवाशिषि ॥ १४८ ॥
१ कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधः ।
२ सिद्धं तूभयनियमात् ।
इत्थंभूतेन कृतमिति च ॥ १४९ ॥
अनो भावकर्मवचनः॥ १५० ॥

१ प. पुस्तके 'वा' पदं नास्ति । २ प. पुस्तके °पदस्या° इति पाठः । ३ प. पुस्तके समासान्तोदात्तत्वमिति ।

मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ॥ १५१ ॥
सप्तम्याः पुण्यम् ॥ १५२ ॥
ऊनार्थकलहं तृतीयायाः ॥ १५३॥
मिश्रं चानुपसर्गमसंधौ ॥ १५४ ॥
नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः ॥ १५५ ॥
ययतोश्चातदर्थे ॥ १५६ ॥
अच्कावशक्तौ ॥ १५७ ॥
आक्रोशे च ॥ १५८ ॥
संज्ञायाम् ॥ १५९ ॥
कृत्योकेष्णुच्चार्वादयश्च ॥ १६० ॥
विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ १६१ ॥
बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ १६२ ॥
संख्यायाः स्तनः ॥ १६३ ॥
विभाषा छन्दसि ॥ १६४ ॥
संज्ञायां मित्राजिनयोः ॥ १६५ ॥
१ ऋषिप्रतिषेधो मित्रे ।
व्यवायिनो ऽन्तरम् ॥ १६६ ॥
मुखं स्वाङ्गम् ॥ १६७ ॥
नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः॥ १६८ ॥
निष्ठोपमानादन्यतरस्याम् ॥ १६९ ॥
जातिकालसुखादिभ्यो ऽनाच्छादनात्क्तो ऽकृतमितप्रतिपन्नाः ॥ १७० ॥
वा जाते ॥ १७१ ॥
नञ्सुभ्याम् ॥ १७२ ॥
कपि पूर्वम् ॥ १७३ ॥
ह्रस्वान्ते ऽन्त्यात्पूर्वम् ॥ १७४ ॥
बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७५ ॥
१ बहोर्नञ्वदुत्तरपदाद्युदात्तार्थम् ।
न गुणादयो ऽवयवाः ॥ १७६ ॥
उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ॥ १७७ ॥
१ उपसर्गात्स्वाङ्गं ध्रुवं मुखस्यान्तोदात्तत्वात् ।
वनं समासे ॥ १७८ ॥
अन्तः ॥ १७९ ॥
अन्तश्च ॥ १८० ॥
न निविभ्याम् ॥ १८१ ॥
परेरभितोभाविमण्डलम् ॥ १८२ ॥
प्रादस्वाङ्गं संज्ञायाम् ॥ १८३ ॥
निरुदकादीनि च ॥ १८४ ॥
अभेर्मुखम् ॥ १८५ ॥
अपाच्च ॥ १८६ ॥
१ अभेर्मुखमपाच्चाध्रुवार्थम् ।
२ अबहुव्रीह्यर्थं वा ।
स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च ॥ १८७ ॥
१ स्फिगपूतग्रहणं च ।
अधेरुपरिस्थम् ॥ १८८ ॥
अनोरप्रधानकनीयसी ॥ १८९ ॥
पुरुषश्चान्वादिष्टः ॥ १९० ॥
अतेरकृत्पदे ॥ १९१ ॥
१ अतेर्धातुलोपे ।
नेरनिधाने ॥ १९२ ॥
प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥
उपाद्द्व्यजजिनमगौरादयः ॥ १९४ ॥

**सोरवक्षेपणे ॥ १९५**

**विभाषोत्पुच्छे ॥ १९६ ॥**

**द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥१९७॥**

१ द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसंख्यानम् ।

२ नकारान्तेऽकारान्तस्य ।

३ उदात्तलोपात्सिद्धम् ।

**सक्थं चाक्रान्तात् ॥ १९८ ॥**

**परादिश्छन्दसि बहुलम्[1] ॥ १९९ ॥**

१ अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम् ।

॥ इति षष्ठाध्यायस्य द्वितीयः पादः ॥

---

**अलुगुत्तरपदे ॥ १ ॥**

१ उत्तरपदाधिकारस्य प्रयोजनं स्तोकादिभ्योऽलुगानङ्किोह्वखनलोपाः[2] ।

२ एकवद्वचनमनर्थकम् ।

३ द्विबहुष्वसमासः ।

४ उक्तं[3] वा ।

५ एकवद्वचने हि गोषुचरेऽतिप्रसङ्गः ।

६ वर्षाभ्यश्च जे ।

७ अपो योनियन्मतिषु ।

८ जे चरे च ।

**पञ्चम्याः स्तोकादिभ्यः ॥ २ ॥**

१ पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानम् ।

२ अन्यार्थे च ।

**ओजःसहोऽम्भस्तमसस्तृतीयायाः ॥ ३॥**

१ अञ्जस उपसंख्यानम् ।

२ पुंसानुजो जनुषान्धो विकृताक्ष इति च ।

**मनसः संज्ञायाम् ॥ ४ ॥**

**आज्ञायिनि च ॥ ५ ॥**

१ आत्मनश्च[4] पूरणे ।

२ अन्यार्थे च ।

**वैयाकरणाख्यायां चतुर्थ्याः ॥ ६ ॥**

**परस्य च ॥ ७ ॥**

१ आत्मनेभाषपरस्मैभाषयोरुपसंख्यानम् ।

**हलदन्तात्सप्तम्याः संज्ञायाम् ॥ ८ ॥**

१ हृद्द्युभ्यां ङेरुपसंख्यानम् ।

२ अन्यार्थे च ।

३ हलदन्ताधिकारे गोरुपसंख्यानम् ।

४ लुकोऽवादेशो विप्रतिषेधेनेति चेद्भूमिपाशेऽतिप्रसङ्गः ।

५ अकोऽत इति वा संध्यक्षरार्थम् ।

**कारनाम्नि च प्राचां हलादौ ॥ ९ ॥**

१ कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्गः ।

२ अप्राप्ते समासविधानम् ।

३ योगविभागात्सिद्धम् ।

---

१ प. पुस्तके इतः परमधिकम् । परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं स्मृतः । २ प. पुस्तके इतः परमधिकम् । एकवच्च । ३ प. पुस्तके नास्ति । ४ इदं वार्तिकं वै. का. पुस्तकयोः सूत्रत्वेन गृहीतम् । भाष्ये वार्तिकत्वेन स्पष्टमुपलम्भादस्माभिर्वार्तिकपाठे संगृहीतम् । कौमुद्यां 'आत्मनश्च' इत्येवांशः सूत्रत्वेन परिगृहीतः । सोऽपि चिन्त्यः ।

मध्याद्गुरौ ॥ १० ॥

१ गुरावन्ताच्च ।

अमूर्धमस्तकात्स्वाङ्गादकामे ॥ ११ ॥

बन्धे च विभाषा ॥ १२ ॥

तत्पुरुषे कृति बहुलम् ॥ १३ ॥

१ तत्पुरुषे कृति बहुलमकर्मधारये ।

२ लुगलुगनुक्रमणं बहुलवचनस्याकृत्स्न-त्वात् ।

प्रावृट्शरत्कालदिवां जे ॥ १४ ॥

विभाषा वर्षक्षरशरवरात् ॥ १५ ॥

घकालतनेषु कालनाम्नः ॥ १६ ॥

शयवासवासिष्वकालात् ॥ १७ ॥

नेन्सिद्धबध्नातिषु च ॥ १८ ॥

स्थे च भाषायाम् ॥ १९ ॥

षष्ठ्या आक्रोशे ॥ २० ॥

१ षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्ड-हरेषूपसंख्यानम् ।

२ आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानम्[1] ।

३ देवानांप्रिय इति च ।

४ शेपपुच्छलाङ्गुलेषु शुनः संज्ञायाम् ।

५ दिवश्च दासे ।

पुत्रेऽन्यतरस्याम् ॥ २१ ॥

ऋतो विद्यायोनिसंबन्धेभ्यः ॥ २२ ॥

१ विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपद-ग्रहणम् ।

विभाषा स्वसृपत्योः ॥ २३ ॥

आनङृतो द्वन्द्वे ॥ २४ ॥

१ ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानम् ।

२ कार्यी चानिर्दिष्टः ।

३ अविशेषेण पितृपितामहादिष्वतिप्रसङ्गः ।

देवताद्वन्द्वे च ॥ २५ ॥

१ देवताद्वन्द्व उभयत्र वायोः प्रतिषेधः ।

२ ब्रह्मप्रजापत्यादीनां च ।

ईदग्नेः सोमवरुणयोः ॥ २६ ॥

इद्वृद्धौ ॥ २७ ॥

१ इद्वृद्धौ विष्णोः प्रतिषेधः ।

दिवो द्यावा ॥ २८ ॥

दिवसश्च पृथिव्याम् ॥ २९ ॥

उषासोषसः ॥ ३० ॥

मातरपितरावुदीचाम् ॥ ३१ ॥

पितरामातरा च च्छन्दसि ॥ ३२ ॥

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समाना-धिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ३३ ॥

१ पुंवद्भावे स्त्रीग्रहणं प्रत्ययग्रहणं चेत्तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधविज्ञानम् ।

२ प्रातिपदिकस्य च प्रत्याप्रत्तिः ।

३ स्थानिवत्प्रसङ्गश्च ।

४ वतण्ड्यादिषु पुंवद्वचनम् ।

५ स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत्सर्व-प्रसङ्गोऽविशेषात् ।

६ भाषितपुंस्कानुपपत्तिश्च ।

७ अर्थातिदेशे विप्रतिषेधानुपपत्तिः ।

१ प. पुस्तके इतः परमाधिकम् । आमुष्यकुलिकेति च वक्तव्यम् ।

८ पूरण्यां प्रधानपूरणीग्रहणम् ।

**तसिलादिष्वा कृत्वसुचः ॥ ३४ ॥**

१ तसिलादी त्रतसौ ।

२ तरप्तमपौ ।

३ चरड्जातीयरौ ।

४ कल्पब्देशीयरौ ।

५ रूपप्पाशपौ ।

६ थम्थालौ ।

७ दार्हिलौ ।

८ तिल्थ्यनौ ।

९ शसि बह्वल्पार्थस्य ।

१० त्वतलोर्गुणवचनस्य ।

११ भस्याढे तद्धिते ।

१२ ठक्छसोश्च ।

**क्यङ्मानिनोश्च ॥ ३५ ॥**

१ मानिन्ग्रहणमस्त्यर्थमसमानाधिकरणार्थं च ।

**न कोपधायाः ॥ ३६ ॥**

१ कोपधप्रतिषेधे तद्धितवुग्रहणम् ।

**संज्ञापूरण्योश्च ॥ ३७ ॥**

**वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ॥ ३८ ॥**

**स्वाङ्गाच्चेतः ॥ ३९ ॥**[1]

१ स्वाङ्गाच्चेतोऽमानिनि ।

**जातेश्च ॥ ४० ॥**

**पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ४१ ॥**

१ पुंवत्कर्मधारये प्रतिषिद्धार्थम् ।

२ कुक्कुट्यादीनामण्डादिषु पुंवद्वचनम् ।

३ न वाऽस्त्रीपूर्वपदविवक्षितत्वात् ।

४ अग्नेरीत्त्वाद्वरुणस्य वृद्धिर्विप्रतिषेधेन ।

५ पुंवद्भावाद्ध्रस्वत्वं खिद्धादिकेषु ।

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्यो ऽनेकाचो ह्रस्वः ॥ ४२ ॥**[2]

**नद्याः शेषस्यान्यतरस्याम् ॥ ४३ ॥**

**उगितश्च ॥ ४४ ॥**

**आन्महतः समानाधिकरणजातीययोः ॥ ४५ ॥**[4]

१ महदात्त्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं च नानाधिकरणार्थम् ।

२ अष्टनः कपाले हविषि ।

३ गवि च युक्ते ।

**द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ४६ ॥**[5]

**त्रेस्त्रयः ॥ ४७ ॥**

**विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ४८ ॥**

**हृदयस्य हृल्लेखयदण्लासेषु ॥ ४९ ॥**

---

१ वै. का. पुस्तकयोः °च्चेतोऽमानिनीति । अत्र सूत्रे भाष्ये 'स्वाङ्गाच्चतोऽमानिनि' इति वार्तिकमुपलभ्यते तथैवास्माभिर्वार्तिकपाठे संगृहीतम् । २ प. पुस्तके °धादिषु पाठः । ३ प. पुस्तके इतः परमधिकम् । कृन्नद्याः प्रतिषेधः । ४ प. पुस्तके इतः परमधिकम् । अन्यप्रकृतिस्त्वमहान्भूतप्रकृतौ महान्भवत्येव । तस्माद्दात्त्वं न स्यात् । पुंवत्तु कथं भवेदत्र । अमहति महान्हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् । तस्मात्सिध्यति पुंवन् । निवर्त्यमात्त्वं तु मन्यते । यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं ह्यात्त्वम् । कर्तव्यं मन्यते न लक्षणेन लक्षणोक्तश्चायम् । शेषवचनात्तु योऽसौ प्रत्यारम्भात्कृतो बहुव्रीहिः । तस्मात्सिध्यति तस्मिन् प्रधानतो वा यतो वृत्तिः । ५ प. पुस्तके इतः परमधिकम् । प्राक्शतादिति वक्तव्यम् ।

१ यदणग्रहणे रूपग्रहणं लेखग्रहणात् ।

**वा शोकष्यञ्रोगेषु ॥ ५० ॥**

**पादस्य पदाज्यातिगोपहतेषु ॥ ५१ ॥**

१ पदादेशेऽन्तोदात्तनिपातनं पदोपहतार्थम् ।

२ उपदेशिवद्वचनं च स्वरसिद्ध्यर्थम् ।

**पद्यत्यतदर्थे ॥ ५२ ॥**

१ पद्भाव इके चरतावुपसंख्यानम् ।

**हिमकाषिहतिषु च ॥ ५३ ॥**

**ऋचः शे ॥ ५४ ॥**

**वा घोषमिश्रशब्देषु ॥ ५५ ॥**

**उदकस्योदः संज्ञायाम् ॥ ५६ ॥**

१ संज्ञायामुत्तरपदस्य च ।

**पेषंवासवाहनधिषु च ॥ ५७ ॥**

**एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ५८ ॥**

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥ ५९ ॥**

**इको ह्रस्वोऽङ्यो गालवस्य ॥ ६० ॥**

१ इको ह्रस्वत्वमुत्तरपदमात्रे ।

२ सर्वान्ते हि लोकाविज्ञानम् ।

३ इयङुवङ्व्ययप्रतिषेधः[3] ।

**एक तद्धिते च ॥ ६१ ॥**

**ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ ६२ ॥**

**त्वे च ॥ ६३ ॥**

**इष्टकेषीकामालानां चिततूलभारिषु ॥ ६४ ॥**

**खित्यनव्ययस्य ॥ ६५ ॥**

१ खिति ह्रस्वाप्रसिद्धिरनजन्तत्वात् ।

२ सिद्धं तु ह्रस्वान्तस्य मुम्वचनात् ।

३ संनियोगाद्वा ।

**अरुर्द्विषदजन्तस्य मुम् ॥ ६६ ॥**

**इच एकाचोऽम् प्रत्ययवच्च ॥ ६७ ॥**

१ अमः प्रत्ययवदनुदेशे प्रयोजनमात्वपूर्वसवर्णगुणेयङुवङादेशाः ।

२ अमः प्रत्ययवदनुदेश आत्वपूर्वसवर्णाप्रसिद्धिरप्रथमात्वात् ।

३ सामान्यातिदेशे विशेषानतिदेशः ।

४ सिद्धं तु द्वितीयैकवचनवद्वचनात् ।

५ एकशेषनिर्देशाद्वा ।

**वाचंयमपुरंदरौ च ॥ ६८ ॥**

**कारे सत्यागदस्य ॥ ६९ ॥**

१ अस्तुसत्यागदस्य कारे ।

२ भक्षस्य च्छन्दसि ।

३ धेनोर्भव्यायाम् ।

४ लोकस्य पृणे ।

५ इत्येऽनभ्यासस्य ।

६ भ्राष्ट्राग्न्योरिन्धे ।

७ गिलेऽगिलस्य[4] ।

८ उष्णभद्रयोः करणे ।

९ सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा ।

**श्येनतिलस्य पाते ञे ॥ ७० ॥**

**रात्रेः कृति विभाषा ॥ ७१ ॥**

---

१ प. पुस्तके । उत्तरपदाधिकारेप्रत्ययग्रहणे इत्यधिकम् । २ प. पुस्तके इतः परमधिकम् । निष्के चोपसंख्यानम् । ३ प. पुस्तके इतः परमधिकम् । अभ्रङ्कूसादीनामिति वक्तव्यम् । ४ प. पुस्तके परमधिकम् । गिलेगिले चेति वक्तव्यम् ।

१ रात्रेरप्राप्ते ।

**नलोपो नञः ॥ ७२ ॥**

१ नञो नलोपेऽवक्षेपे तिङ्युपसंख्यानम् ।

**तस्मान्नुडचि ॥ ७३**

**नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ॥ ७४ ॥**

**एकादिश्चैकस्य चादुक् ॥ ७५ ॥**

**नगोऽप्राणिष्वन्यतरस्याम् ॥ ७६ ॥**

**सहस्य सः संज्ञायाम् ॥ ७७ ॥**

१ सहस्य हलोपवचनम् ।

२ सादेशे हि स्वरे दोषः ।

**ग्रन्थान्ताधिके च ॥ ७८ ॥**

१ ग्रन्थान्ते वचनानर्थक्यमव्ययीभावेन कृतत्वात् ।

**द्वितीये चानुपाख्ये ॥ ७९ ॥**

**अव्ययीभावे चाकाले ॥ ८० ॥**

**वोपसर्जनस्य ॥ ८१ ॥**

१ उपसर्जनस्य वावचने सर्वप्रसङ्गोऽविशेषात् ।

२ सिद्धं तु बहुव्रीहिनिर्देशात् ।

**[1]प्रकृत्याशिषि ॥ ८२ ॥**

१ प्रकृत्याशिष्यगवादिषु ।

**समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु ॥ ८३ ॥**

**ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥ ८४ ॥**

**चरणे ब्रह्मचारिणि ॥ ८५ ॥**

१ ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिर्व्रतलोपश्च ।

**तीर्थे ये ॥ ८६ ॥**

**विभाषोदरे ॥ ८७ ॥**

**दृग्दृशवतुषु ॥ ८८ ॥**

१ दृग्दृश[2]वतुषु दृक्ष उपसंख्यानम् ।

**इदंकिमोरीश्की ॥ ८९ ॥**

**आ सर्वनाम्नः ॥ ९० ॥**

**विष्वग्देवयोश्च टेरद्र्यञ्चतौ व[3]प्रत्यये । ९१ ।**

**समः समि ॥ ९२ ॥**

**तिरसस्तिर्यलोपे ॥ ९३ ॥**

**सहस्य सध्रिः ॥ ९४ ॥**

१ अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम् ।

२ [4]तत्र च्छन्दसि स्त्रियां प्रतिषेधः ।

**सध मादस्थयोश्छन्दसि ॥ ९५ ॥**

**द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ९६ ॥**

१ समाप ईत्त्वप्रतिषेधः[5] ।

**ऊदनोर्देशे ॥ ९७ ॥**

**अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ॥ ९८ ॥**

**अर्थे विभाषा ॥ ९९ ॥**

**कोः कत् तत्पुरुषेऽचि ॥ १०० ॥**

१ कद्भावे त्र्यावुपसंख्यानम् ।

**रथवदयोश्च ॥ १०१ ॥**

---

१ वै. का. प्र. पुस्तकेषु प्रकृत्याशिष्यगोवत्सहलेषु इति पाठः । २ प. पुस्तके °श्वतुषु पाठः । ३ नि. प्र. बा पुस्तकेषु °तावप्रत्यये इति पाठः । ४ प. पुस्तके बहुलमित्यधिकम् । ५ प. पुस्तके इतः परमाधिकम् । ईत्त्वमनवर्णादिति वक्तव्यम् ।

तृणे च जातौ ॥ १०२ ॥

का पथ्यक्षयोः । १०३ ॥

ईषदर्थे ॥ १०४ ॥

विभाषा पुरुषे ॥ १०५ ॥

कवं चोष्णे ॥ १०६ ॥

पथि च च्छन्दसि ॥ १०७ ॥

पृषोदरादीनि यथोपदिष्टम् ॥ १०८ ॥

१ दिक्शब्देभ्यस्तीरस्य तारभावो वा ।

२ वाचो वादे डत्वं वलभावश्चोत्तरपदस्येञि ।

३ षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च ।

४ धासु वा ।

५ दुरो दाशनाशदभध्येषु ।

६ स्वरो रोहतौ छन्दसि ।

संख्याविसायपूर्वस्याह्नस्याहनन्यतरस्यां ङौ ॥ १०९ ॥

ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ ११० ॥

सहिवहोरोदवर्णस्य ॥ १११ ॥

साढ्यै साढ्वा साढेति निगमे ॥ ११२ ॥

संहितायाम् ॥ ११३ ॥

कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ॥ ११४ ॥

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ११५ ॥

१ अञ्चातिनह्यादिषु क्विब्ग्रहणानर्थक्यं यस्मिन्विधिस्तदादावल्ग्रहणे ।

वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् ॥ ११६ ॥

वले ॥ ११७ ॥

मतौ बह्वचोऽनजिरादीनाम् ॥ ११८ ॥

शरादीनां च ॥ ११९ ॥

इको वहेऽपीलोः[1] ॥ १२० ॥

उपसर्गस्य घञ्यमनुष्ये बहुलम्[2] ॥ १२१ ॥

१ सादकारयोः कृत्रिमे ।

२ प्रतिवेशादीनां विभाषा ।

इकः काशे ॥ १२२ ॥

दस्ति ॥ १२३ ॥

अष्टनः संज्ञायाम् ॥ १२४ ॥

छन्दसि च ॥ १२५ ॥

चितेः कपि ॥ १२६ ॥

विश्वस्य वसुराटोः ॥ १२७ ॥

नरे संज्ञायाम् ॥ १२८ ॥

मित्रे चर्षौ ॥ १२९ ॥

मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥ १३० ॥

ओषधेश्च विभक्तावप्रथमायाम् ॥ १३१ ॥

ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥ १३२ ॥

इकः सुञि ॥ १३३ ॥

द्व्यचोऽतस्तिङः ॥ १३४ ॥

निपातस्य च ॥ १३५ ॥

अन्येषामपि दृश्यते ॥ १३६ ॥

चौ ॥ १३७ ॥

१ प. पुस्तके इतः परमधिकम् । अपील्वादीनामिति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् । अमनुष्यादिष्विति वक्तव्यम् ।

**संप्रसारणस्य ॥ १३८ ॥**

१ इको ह्रस्वात्संप्रसारणदीर्घत्वं विप्रतिषेधेन ।

॥ इति षष्ठाध्यायस्य तृतीयः पादः ॥

---

**अङ्गस्य ॥ १ ॥**

१ अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः ।

२ अवयवषष्ठ्यादीनां चाप्रसिद्धिः ।

३ सिद्धं तु परस्परं प्रत्यङ्गप्रत्ययसंज्ञाभावात् ।

४ संबन्धषष्ठीनिर्देशश्च ।

५ अङ्गाधिकारस्य प्रयोजनं संप्रसारणदीर्घत्वे ।

६ नाम्सनोश्च ।

७ लिङ्गयेत्वे ।

८ अतो भिस ऐस्त्वे ।

९ लुङादिष्वडाटौ ।

१० इयङुवङ्युष्मदस्मत्तातङामिनुडानेमुक्ह्रस्वयिदीर्घभितत्वानि ।

११ अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम् ।

**हलः ॥ २ ॥**

**नामि[1] ॥ ३ ॥**

**न तिसृचतसृ ॥ ४ ॥**

**छन्दस्युभयथा ॥ ५ ॥**

**नृ च ॥ ६ ॥**

**नोपधायाः ॥ ७ ॥**

**सर्वनामस्थाने चासंबुद्धौ ॥ ८ ॥**

**वा षपूर्वस्य निगमे ॥ ९ ॥**

**सान्तमहतः संयोगस्य ॥ १० ॥**

**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ॥ ११ ॥**

**इन्हन्पूषार्यम्णां शौ ॥ १२ ॥**

**सौ च ॥ १३ ॥**

१ हनः क्वावुपधादीर्घत्वप्रसङ्गः[3] ।

२ नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्रानियमः[4] ।

**अत्वसन्तस्य चाधातोः ॥ १४ ॥**

१ अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानम् ।

**अनुनासिकस्य क्विझलोः क्ङिति ॥ १५ ॥**

**अज्झनगमां सनि ॥ १६ ॥**

१ गमेर्दीर्घत्व इङ्ग्रहणम् ।

२ अग्रहणे ह्यनादेशस्यापि दीर्घप्रसङ्गः ।

---

१ प. पुस्तके इतः परमधिकम् । अण्प्रकरणादृकारस्याप्राप्तिः । इग्ग्रहणस्य चाविशेषणत्वात् । २ प. पुस्तके इतः परमधिकम् । नामि दीर्घ आमि चेत्स्यात् कृते दीर्घे न नुड् भवेत् । वचनाद्यत्र तन्नास्ति । नोपधायाश्च चर्मणाम् । ३ प. पुस्तके इतः परमधिकम् । नियमवचनात्सिद्धम् । ४ प. पुस्तके इतः परमधिकम् । दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् । शौ नियमं पुनरेव विदध्यात् । भ्रूणहनीति तथास्य न दुष्येत् । शास्मि निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य । दीर्घविधेरुपधानियमान्मे हन्त यि दीर्घविधौ च न दोषः । सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे । यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ।

३ न वा छन्दस्यनादेशस्यापि दीर्घत्वदर्शनादिङ्ग्रहणानर्थक्यम् ।

४ सनि दीर्घ उपधाधिकारश्चेद्व्यञ्जनप्रतिषेधः ।

५ [1]अनधिकार उक्तम् ।

**तनोतेर्विभाषा ॥ १७ ॥**

**क्रमश्च क्त्वि ॥ १८ ॥**

**च्छ्वोः शूडनुनासिके च ॥ १९ ॥**

१ शूट्त्वे क्ङिदधिकारश्चेच्छः षत्वम् ।

२ तुक्प्रसङ्गश्च[2] ।

**ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥२०॥**

**राल्लोपः ॥ २१ ॥**

**असिद्धवदत्रा भात् ॥ २२ ॥**

१ [3]असिद्धवचन उक्तम् ।

२ अत्रग्रहणं विषयार्थम् ।

३ प्रयोजनं शैत्त्वं धित्वे ।

४ हिलोप उत्त्वे ।

५ तास्तिलोपेण्यणादेशा अडाड्विधौ ।

६ अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च ।

७ संप्रसारणमवर्णलोपे ।

८ रेभाव आल्लोपे[4] ।

९ सिद्धं वसुसंप्रसारणमज्विधौ ।

१० बहिरङ्गलक्षणत्वादसिद्धत्वाच्च ।

११ [5]आत्त्वं यलोपाल्लोपयोः पशुषो न वाजान् चाखायिता चाखायितुम् ।

१२ समानाश्रयवचनात्सिद्धम् ।

१३ ह्रस्वयलोपाल्लोपाश्चायादेशे ल्यपि ।

१४ वुग्युटावुवङ्यणोः ।

१५ प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानम् ।

१६ आ भादिति चेद्वसुसंप्रसारणयलोपप्रस्थादीनां प्रतिषेधः ।

**श्नान्नलोपः ॥ २३ ॥**

**अनिदितां हल उपधायाः क्ङिति ॥२४॥**

१ अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम् ।

२ बृंहेरच्यनिटि ।

३ रञ्जेर्णौ मृगरमणे ।

४ घिनुणि निपातनात्सिद्धम् ।

५ रजकरजनरजःसु क्त्वि[9]वात्सिद्धम् ।

**दंशसञ्जस्वञ्जां शपि ॥ २५ ॥**

**रञ्जेश्च ॥ २६ ॥**

**घञि च भावकरणयोः ॥ २७ ॥**

**स्यदो जवे ॥ २८ ॥**

**अवोदैधौद्मप्रश्रथहिमश्रथाः ॥ २९ ॥**

**नाञ्चेः पूजायाम् ॥ ३० ॥**

**क्त्वि स्कन्दिस्यन्दोः ॥ ३१ ॥**

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । निवृत्ते दिव ऊड्भावः । तदर्थं तपरः कृतः । ३ प. पुस्तके नास्ति । ४ प. पुस्तके इतः परमधिकम् । उत्तु कृत्रः कथमोर्विनिवृत्तौ । णेरपि चेटि कथं विनिवृत्तिः । अब्रुवतस्तव योगमिमं स्याल्लुक्च चिणो नु कथं न तरस्य । चं भगवान्कृतवांस्तु तदर्थं तेन भवेदिटि णेर्विनिवृत्तिः । म्वोरपि ये च तथाप्यनुवृत्तौ । चिण्लुकि च क्ङिन एव हि लुक्स्यात् । ५ प. पुस्तके °सुप्रसारण° । ६ प. पुस्तके नास्ति । ७ प. पुस्तके °सुप्रसारण° । ८ प. पुस्तके घिनुणि च इति पाठः । ९ प. पुस्तके क्त्विवात्सिद्धामित्यस्य स्थाने उपसंख्यानमिति पाठः ।

**जान्तनशां विभाषा ॥ ३२ ॥**

**भञ्जेश्च चिणि ॥ ३३ ॥**

**शास इदङ्हलोः ॥ ३४ ॥**

१ शास इत्त्व आशासः क्वौ ।

**शा हौ ॥ ३५ ॥**

**हन्तेर्जः ॥ ३६ ॥**

**अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ ३७ ॥**

१ अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि च ।

२ वामः ।

**वा ल्यपि ॥ ३८ ॥**

**न क्तिचि दीर्घश्च ॥ ३९ ॥**

**गमः क्वौ ॥ ४० ॥**[1]

**विड्वनोरनुनासिकस्यात् ॥ ४१ ॥**

**जनसनखनां सञ्झलोः ॥ ४२ ॥**

१ सनोतेरनुनासिकलोपादात्त्वं विप्रतिषेधेन।

**ये विभाषा ॥ ४३ ॥**

**तनोतेर्यकि ॥ ४४ ॥**

**सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४५ ॥**

**आर्धधातुके[3] ॥ ४६ ॥**

**भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ४७ ॥**

१ भ्रस्जादेशात्संप्रसारणं विप्रतिषेधेन ।

२ रसोर्वचने सिचि वृद्धेर्भ्रस्जादेशः ।

**अतो लोपः ॥ ४८ ॥**

१ ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धम् ।

**यस्य हलः ॥ ४९ ॥**

१ यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः।

२ संघातग्रहणं चेत्क्यस्य विभाषायां दोषः ।

३ आदेः परवचनात्सिद्धम् ।

**क्यस्य विभाषा ॥ ५० ॥**

**णेरनिटि ॥ ५१ ॥**

**निष्ठायां सेटि[4] ॥ ५२ ॥**

१ निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेत्तत्सिद्धमनिडभावात् ।

२ एकाचो हि प्रतिषेधः ।

३ इड्भावार्थं तु तन्निमित्तत्वाल्लोपस्य ।

४ अवचने हि णिलोप इट्प्रतिषेधप्रसङ्गः ।

५ वृधिरमिशृधीनामुपसंख्यानं सार्वधातुकत्वात् ।

**जनिता मन्त्रे ॥ ५३ ॥**

**शमिता यज्ञे ॥ ५४ ॥**

**अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ५५ ॥**

१ क्त्वाविटि णेर्गुणवचनम् ।

२ इत्नौ प्रत्ययान्तरकरणम् ।

३ अयादेशे चोपसंख्यानम् ।

**ल्यपि लघुपूर्वात् ॥ ५६ ॥**

१ ल्यपि लघुपूर्वस्येति चेद्व्यञ्जनान्तेषूपसंख्यानम् ।

---

१ प. पुस्तके इतः परमधिकम् । गमादीनामिति वक्तव्यम् । ऊङ् च । २ प. पुस्तके °रनुदात्त° इति पाठः । ३ प. पुस्तके इतः परमधिकम् । अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् । आल्लोप ईत्त्वमेत्त्वं च चिण्वद्भावश्च सीयुटि । ४ प. पुस्तके इतः परमधिकम् । निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थम् ।

२ अल्लोपे च गुरुपूर्वात्प्रतिषेधः ।

३ ल्यपि लघुपूर्वादिति वचनात्सिद्धम् ।

४ ह्रस्वादिषु चोक्तम् ।

विभाषापः[1] ॥ ५७ ॥

१ आपः सानुबन्धकनिर्देशादिङि सिद्धम् ।

युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥

क्षियः ॥ ५९ ॥

निष्ठायामण्यदर्थे ॥ ६० ॥

वाक्रोशदैन्ययोः ॥ ६१ ॥

स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च[2]॥६२॥

१ चिण्वद्भाव उपदेशवचनमृकारगुणबलीयस्त्वात् ।

२ वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन ।

३ हनिणिङादेशप्रतिषेधश्च ।

४ अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धम् ।

दीङो युडचि क्ङिति ॥ ६३ ॥

आतो लोप इटि च ॥ ६४ ॥

१ इड्ग्रहणमक्ङिदर्थम् ।

२ सार्वधातुके चादीत्यार्धधातुकाधिकारादुपसंख्यानम् ।

ईद्यति ॥ ६५ ॥

घुमास्थागापाजहातिसां हलि ॥ ६६ ॥

१ ईत्वे वकारप्रतिषेधो घृतं घृतपावान इति दर्शनात् ।

२ धीवरी पीवरीति चोक्तम् ।

एर्लिङि ॥ ६७ ॥

वान्यस्य संयोगादेः ॥ ६८ ॥

न ल्यपि ॥ ६९ ॥

मयतेरिदन्यतरस्याम् ॥ ७० ॥

लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ७१ ॥

आडजादीनाम् ॥ ७२ ॥

छन्दस्यपि दृश्यते ॥ ७३ ॥

न माङ्योगे[4] ॥ ७४ ॥

बहुलं छन्दस्यमाङ्योगेऽपि ॥ ७५ ॥

इरयो रे ॥ ७६ ॥

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥७७॥

१ इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलम् ।

अभ्यासस्यासवर्णे ॥ ७८ ॥

स्त्रियाः ॥ ७९ ॥

वाम्शसोः ॥ ८० ॥

इणो यण् ॥ ८१ ॥

एरनेकाचो ऽसंयोगपूर्वस्य ॥ ८२ ॥

१ यणादेशः स्वरपदपूर्वोपधस्य च ।

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । इङादेशस्य प्रतिषेधो वक्तव्यः । ३ प. पुस्तके इतः परमधिकम् । वृद्धिश्चिण्वद्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति । इड्वासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वलिनिमित्तो विघाती । ४ प. पुस्तके नास्ति । ५ प. पुस्तके इतः परमधिकम् । अजादीनामटा सिद्धम् । वृद्ध्यर्थमिति चेदटः । अस्वपो हसतीत्यत्र । धातौ वृद्धिमटः स्मरेत् । पररूपं गुणे नाटः । ओमाङोरुसि तत्समम् । छन्दोऽर्थं बहुलं दीर्घम् । इणस्त्योरन्तरङ्गतः ।

२ असंयोगपूर्वे ह्यनिष्टप्रसङ्गः ।

ओः सुपि ॥ ८३ ॥

वर्षाभ्वश्च ॥ ८४ ॥

१ वर्षाभूपुनर्भ्वश्च[१] ।

न भूसुधियोः ॥ ८५ ॥

छन्दस्युभयथा ॥ ८६ ॥

हुश्नुवोः सार्वधातुके ॥ ८७ ॥

१ हुश्नुग्रहणानर्थक्यमन्यस्याभावात्[२] ।

२ यङ्लुगर्थमिति चेदार्धधातुकत्वात्सिद्धम् ।

भुवो वुग्लुङ्लिटोः ॥ ८८ ॥

ऊदुपधाया गोहः ॥ ८९ ॥

१ गोहिग्रहणं विषयार्थम् ।

२ अयादेशप्रतिषेधार्थं च ।

३ ह्रस्वादेशे ह्ययादेशप्रसङ्ग ऊत्त्वस्यासिद्धत्वात् ।

दोषो णौ ॥ ९० ॥

१ दोषिग्रहणं च ।

वा चित्तविरागे ॥ ९१ ॥

मितां ह्रस्वः ॥ ९२ ॥

चिण्णमुलोर्दीर्घो ऽन्यतरस्याम्[३] ॥ ९३ ॥

१ चिण्णमुलोर्णिव्यपेतानां यङ्लोपे चान्तरङ्गलक्षणत्वात्सिद्धम् ।

खचि ह्रस्वः ॥ ९४ ॥

ह्लादो निष्ठायाम् ॥ ९५ ॥

छादेर्घे ऽद्ब्युपसर्गस्य[४] ॥ ९६ ॥

इस्मन्त्रन्क्विषु च ॥ ९७ ॥

गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ९८ ॥

तनिपत्योश्छन्दसि ॥ ९९ ॥

घसिभसोर्हलि[५] ॥ १०० ॥

१ हल्ग्रहणमनर्थकमन्यत्रापि दर्शनात् ।

हुझल्भ्यो हेर्धिः ॥ १०१ ॥

१ हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः ।

श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ १०२ ॥

अङितश्च ॥ १०३ ॥

चिणो लुक्[७] ॥ १०४ ॥

१ चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात् ।

२ तलोपस्य चासिद्धत्वात् ।

३ कार्यकृतत्वाद्वा ।

अतो हेः ॥ १०५ ॥

उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥

१ उतश्च प्रत्ययाच्छन्दोवावचनम् ।

२ उत्तरार्थं च ।

लोपश्चास्यान्यतरस्यां म्वोः ॥ १०७ ॥

नित्यं करोतेः ॥ १०८ ॥

ये च ॥ १०९ ॥

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । वर्षादिकारपुनःपूर्वस्य भुव इति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । यङ्लुगर्थम् । ४ प. पुस्तके इतः परमधिकम् । चिण्णमुलोर्णिव्यपेतानां यङ्लोपे च । ५ प. पुस्तके इतः परमधिकम् । अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् । न वा एष लोके संप्रत्ययः । ६ वै. का. प्र. क. बा. पुस्तकेषु चकारोऽधिकः । ७ प. पुस्तक इतः परमधिकम् । चिणो लुकि तग्रहणम् । ८ प. पुस्तके इतः परमधिकम् । स्यान्तस्य प्रतिषेधो वक्तव्यः ।

अत उत् सार्वधातुके[1] ॥ ११० ॥

१ कृञ उत्त्व उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः ।

श्नसोरल्लोपः ॥ १११ ॥

श्नाभ्यस्तयोरातः ॥ ११२ ॥

ई हल्यघोः ॥ ११३ ॥

इद्दरिद्रस्य ॥ ११४ ॥

१ दरिद्रातेरार्धधातुके लोपः

२ सिद्धश्च प्रत्ययविधौ ।

३ वाद्यतन्याम् ।

भियो ऽन्यतरस्याम् ॥ ११५ ॥

जहातेश्च ॥ ११६ ॥

आ च हौ ॥ ११७ ॥

लोपो यि ॥ ११८ ॥

घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥

अत एकहल्मध्ये ऽनादेशादेर्लिटि ॥ १२० ॥

१ णकारषकारादेशादेरेत्त्ववचनं लिटि ।

२ फलिभजिग्रहणं तु ज्ञापकमभ्यासादेशसिद्धत्वस्य ।

३ प्रथमतृतीयादीनामादेशादित्वादेत्त्वाभावः ।

४ न वा शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेद एत्त्वविज्ञानस्य ।

५ दम्भ एत्त्वं नलोपस्यासिद्धत्वात्[2] ।

थलि च सेटि ॥ १२१ ॥

१ थल्ग्रहणमक्किदर्थम् ।

तॄफलभजत्रपश्च ॥ १२२ ॥

राधो हिंसायाम् ॥ १२३ ॥

१ राधादिषु स्थानिनिर्देशः ।

वा जॄभ्रमुत्रसाम् ॥ १२४ ॥

फणां च सप्तानाम् ॥ १२५ ॥

न शसददवादिगुणानाम् ॥ १२६ ॥

अर्वणस्त्रसावनञः ॥ १२७ ॥

मघवा बहुलम्[3] ॥ १२८ ॥

भस्य ॥ १२९ ॥

पादः पत् ॥ १३० ॥

१ पाद उपधाह्रस्वत्वम् ।

२ आदेशे हि सर्वादेशप्रसङ्गः ।

३ न वा निर्दिश्यमानस्यादेशत्वात् ।

४ प्रयोजनं सुप्तिङादेशे ।

५ ल्यब्भावे च ।

६ त्रिचतुर्युष्मदस्मत्यदादिविकारेषु च ।

७ उदः पूर्वत्वे ।

वसोः संप्रसारणम् ॥ १३१ ॥

वाह ऊठ् ॥ १३२ ॥

१ वाह ऊड्वचनानर्थक्यं संप्रसारणेन कृतत्वात् ।

---

१ प. पुस्तके इतः परमधिकम् । अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः लोपे द्विर्वचनासिद्धिः । स्थानिवदिति चेत्कृते भवेद्द्वित्वे । नैवं सिध्यति कस्मात्प्रत्ययङ्गत्वाद्धद्धि पररूपम् । तस्मिंश्च कृते लोपः । दीर्घत्वं बाधकं भवेत्तत्र । २ प. पुस्तके षकारणकारा° इति पाठः । ३ प. पुस्तके इतः परमधिकम् । नशिमन्योरलिट्येत्त्वम् । छन्दस्यमिपचोरपि । अनेशं मेनकेत्येतद्व्येमानं शिडि पेचिरन् । यजायेजे वपावेपे दम्भ एत्त्वमलक्षणम् । श्नसोरेत्त्वे तकारेण ज्ञाप्यते त्वेत्वशासनम् । ४ प. पुस्तके इतः परमधिकम् । अर्वणस्तृ मघानेश्च न शिष्यं छान्दसं हि तत् । मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात् ।

२ गुणः प्रत्ययलक्षणत्वात् ।

३ एज्ग्रहणाद्वृद्धिः ।

**श्वयुवमघोनामतद्धिते ॥ १३३ ॥**

१ श्वादीनां[1] प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् ।

२ उक्तं[2] वा ।

**अल्लोपोऽनः ॥ १३४ ॥**

**षपूर्वहन्धृतराज्ञामणि ॥ १३५ ॥**

१ षपूर्वादीनां पुनर्वचनमल्लोपार्थम् ।

२ अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः ।

**विभाषा ङिश्योः ॥ १३६ ॥**

**न संयोगाद्वमन्तात् ॥ १३७ ॥**

**अचः ॥ १३८ ॥**

**उद ईत् ॥ १३९ ॥**

**आतो धातोः ॥ १४० ॥**

१ आतोऽनापः ।

**मन्त्रेष्वाङ्यादेरात्मनः ॥ १४१ ॥**

१ मन्त्रेष्वात्मनः प्रत्ययमात्रप्रसङ्गः[3] ।

२ आदिग्रहणानर्थक्यं चाकारप्रकरणात् ।

**ति विंशतेर्डिति ॥ १४२ ॥**

**टेः[4] ॥ १४३ ॥**

१ डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् ।

**नस्तद्धिते ॥ १४४ ॥**

१ नकारान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् ।

२ चर्मणः कोशे ।

३ अश्मनो विकारे ।

४ शुनः संकोचे ।

५ अव्ययानां च सायंप्रतिकाद्यर्थम् ।

**अह्नष्टखोरेव ॥ १४५ ॥**

**ओर्गुणः ॥ १४६ ॥**

**ढे लोपोऽकद्र्वाः ॥ १४७ ॥**

**यस्येति च ॥ १४८ ॥**

१ यस्येत्यादौ श्यां प्रतिषेधः ।

२ इयङुवङ्भ्यां लोपो विप्रतिषेधेन ।

३ गुणवृद्धी च ।

४ न वेयङुवङादेशस्यान्यविषये वचनात् ।

५ तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधः ।

**सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ १४९ ॥**

१ सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् ।

२ सिद्धं तु स्थानिवत्प्रतिषेधात् ।

३ उपधाग्रहणानर्थक्यं च ।

४ विषयपरिगणनं च ।

५ सूर्यमत्स्ययोर्ङ्याम् ।

६ सूर्यागस्त्ययोश्छे च ।

७ तिष्यपुष्ययोर्नक्षत्राणि ।

८ अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च ।

९ तमे तादेश्च[5] ।

---

१–२ प.पुस्तके नास्ति । ३ प. पुस्तके इतः परमधिकम् । छान्दसत्वात्सिद्धम् । ४ प. पुस्तक इतः परमधिकम् । अभस्योपसंख्यानम् । ५ प. पुस्तक इतः परमधिकम् । तसीत्येष न वक्तव्यो दृष्टो दाशतयेऽपि हि । षौ लोपोऽन्तिषादत्यत्र तथाषौ येऽन्त्यथर्वसु ।

हलस्तद्धितस्य ॥ १५० ॥
आपत्यस्य च तद्धिते ऽनाति ॥ १५१ ॥
क्यच्व्योश्च ॥ १५२ ॥
बिल्वकादिभ्यश्छस्य लुक् ॥१५३ ॥
तुरिष्ठेमेयस्सु ॥ १५४ ॥

१ तुः सर्वलोपविज्ञानमन्त्यस्य वचनानर्थक्यात् ।

टेः ॥ १५५ ॥

१ णाविष्ठवत्प्रातिपदिकस्य ।
२ पुंवद्भावरभावटिलोपयणादिपरार्थम्[1] ।

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादि परं पूर्वस्य च गुणः ॥ १५६ ॥
प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वषित्रब्द्राघिवृन्दाः ॥ १५७ ॥
बहोर्लोपो भू च बहोः ॥ १५८ ॥
इष्ठस्य यिट च ॥ १५९ ॥
ज्यादादीयसः[3] ॥ १६० ॥
र ऋतो हलादेर्लघोः ॥ १६१ ॥
विभाषर्जोश्छन्दसि ॥ १६२ ॥
प्रकृत्यैकाच् ॥ १६३ ॥

१ प्रकृत्यैकाजिष्ठेमेयःसु चेदेकाच उच्चारणसामर्थ्यादवचनात्प्रकृति भावः ।
२ विन्मतोस्तु लुगर्थम् ।
३ प्रकृत्याके राजन्यमनुष्ययुवनः ।

इनण्यनपत्ये ॥ १६४ ॥
गाथिविदथिकेशिगणिपणिनश्च ॥१६५॥
संयोगादिश्च ॥ १६६ ॥
अन् ॥ १६७ ॥
ये चाभावकर्मणोः ॥ १६८ ॥
आत्माध्वानौ खे ॥ १६९ ॥
न मपूर्वो ऽपत्ये ऽवर्मणः ॥ १७० ।

१ मपूर्वात्प्रतिषेधे वा हितनाम्नः ।

ब्राह्मो ऽजातौ ॥ १७१ ॥

१ ब्राह्मस्याजातौ लोपार्थं वचनम् ।
२ तत्राप्राप्तविधाने प्राप्तप्रतिषेधः ।
३ न वा पर्युदाससामर्थ्यात् ।

कार्मस्ताच्छील्ये ॥ १७२ ॥
औक्षमनपत्ये ॥ १७३ ॥
दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७४ ॥

१ भ्रौणहत्ये तत्वनिपातनानर्थक्यं सामान्येन कृतत्वात् ।
२ ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य ।
३ ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन ।
४ एकश्रुत्या निर्देशात्सिद्धम् ।
५ मैत्रेये ढञि यादिलोपनिपातनम् ।
६ हिरण्मये यलोपवचनम् ।
७ हिरण्ययस्य च्छन्दसि मलोपवचनात्सिद्धम् ।

---

१ प. पुस्तके इतः परमधिकम् । विजयिष्ठकरिष्ठयोर्गुणदर्शनात् । २ प. पुस्तके इतः परमधिकम् । णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थम्' इति भारद्वाजीयाः ।
३ प. पुस्तके इतः परमधिकम् । पृथुमृदुकृशभृशदृढपरिवृढानामिति वक्तव्यम् ।

ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ॥ १७५ ॥

॥ इति षष्ठाध्यायस्य चतुर्थः पादः ॥

---

## सप्तमोऽध्यायः ।

युवोरनाकौ ॥ १ ॥

१ युवोरनाकाविति चेद्धातुप्रतिषेधः ।

२ भुज्यवादीनां च ।

३ अनुनासिकपरत्वात्सिद्धम् ।

४ तत्र ङीब्नुमोः प्रतिषेधः ।

५ धात्वन्तस्य च ।

६ षित्टित्करणं तु ज्ञापकमुगित्कार्याभावस्य ।

७ न वा षित्करणं ङीष्विधानार्थम् ।

८ टित्करणमनुपसर्जनार्थम् ।

९ विप्रतिषेधात्तु टापो बलीयस्त्वम् ।

१० धात्वन्तस्य चार्थवद्ग्रहणात्[1] ।

११ नुम्विधौ झल्ग्रहणम् ।

१२ लिङ्गविशिष्टप्रतिषेधार्थम् ।

१३ न वा विभक्तौ लिङ्गविशिष्टाग्रहणात्[2] ।

१४ प्रयोजनं शुनः स्वरे ।

१५ यूनः संप्रसारणे ।

१६ उगिदचां नुम्विधौ ।

१७ अनडुहश्चाम्विधौ ।

१८ पथिमथोरात्त्वे ।

१९ पुंसोऽसुङ्विधौ ।

२० सख्युर्णित्त्वानङौ ।

२१ भवद्भगवदघवतामोद्भावे ।

२२ सिद्धं तु युवोरनुनासिकत्वात् ।

आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ २ ॥

१ आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम् ।

२ न वा क्वचिच्चित्करणादुपदेशिवद्वचनानर्थक्यम् ।

३ तत्रोणादिप्रतिषेधः ।

४ धातोर्वेयङ्वचनात् ।

५ प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम् ।

झो ऽन्तः ॥ ३ ॥

२ झादेशे धात्वन्तप्रतिषेधः[3] ।

२ प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशवचनम् ।

३ असमासनिर्देशात्सिद्धम् ।

४ तत्र शयान्ता इत्यनकारान्तत्वादङ्गस्याद्भावप्रतिषेधः ।

५ सिद्धमनानन्तर्यादनकारान्तेनाद्भावनिवृत्तिः ।

६ तत्र रुटि संनियोगवचनात्सिद्धम् ।

अदभ्यस्तात् ॥ ४ ॥

आत्मनेपदेष्वनतः ॥ ५ ॥

शीङो रुट् ॥ ६ ॥

---

१ प. पुस्तके चार्थवत्त्वादिति पाठः । २ प. पुस्तके ०ग्रहणामिति । ३ प. पुस्तके इतः परमधिकम् । प्रत्ययाधिकारात्सिद्धम् ।

१ रुटि दृशिगुणप्रतिषेधः ।
२ पूर्वान्ते शीङो गुणविधिः ।
३ झादेशादाड्लेटि ।
४ न वा नित्यत्वादाटः ।
५ अन्तरङ्गलक्षणत्वाच्च ।

**वेत्तेर्विभाषा ॥ ७ ॥**

**बहुलं छन्दसि ॥ ८ ॥**

**अतो भिस ऐस् ॥ ९ ॥**

**बहुलं छन्दसि ॥ १० ॥**

**नेदमदसोरकोः ॥ ११ ॥**

**टाङसिङसामिनात्स्याः ॥ १२ ॥**

**ङेर्यः ॥ १३ ॥**

**सर्वनाम्नः स्मै ॥ १४ ॥**

१ अश एकादिष्टात्स्मायादीनामुपसंख्यानम् ।
२ न वा बहिरङ्गलक्षणत्वात् ।

**ङसिङ्योः स्मात्स्मिनौ ॥ १५ ॥**

**पूर्वादिभ्यो नवभ्यो वा ॥ १६ ॥**

**जसः शी ॥ १७ ॥**

**औङ आपः ॥ १८ ॥**

**नपुंसकाच्च ॥ १९ ॥**

**जश्शसोः शिः ॥ २० ॥**

**अष्टाभ्य औश्[2] ॥ २१ ॥**

**षड्भ्यो लुक् ॥ २२ ॥**

**स्वमोर्नपुंसकात् ॥ २३ ॥**

१ स्वमोर्लुक् त्यदादिभ्यश्च[3] ।
२ शिशीलुग्नुम्विधिषुः नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः ।
३ सिद्धं प्रकृतार्थे विशेषणत्वात् ।
४ अस्थ्यादिषु शब्दग्रहणम् ।

**अतो ऽम् ॥ २४ ॥**

**अद् डतरादिभ्यः पञ्चभ्यः ॥ २५ ॥**

१ अद्भावे पूर्वसवर्णप्रतिषेधः ।
२ सिद्धमनुनासिकोपधत्वात् ।
३ टुक्करणाद्वा ।
४ डित्करणाद्वा ।

**नेतराच्छन्दसि ॥ २६ ॥**

१ इतराच्छन्दसि प्रतिषेध एकतरात्सर्वत्र ।
२ नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन ।

**युष्मदस्मद्भ्यां ङसोऽश् ॥ २७ ॥**

१ ङस आदेशे शित्करणानर्थक्यमकारस्याकारवचनानर्थक्यात् ।
२ अर्थवत्त्वादेशे लोपार्थम् ।
३ तस्माच्छित्करणम् ।

**ङेप्रथमयोरम् ॥ २८ ॥**

**शसो न[4] ॥ २९ ॥**

**भ्यसोऽभ्यम् ॥ ३० ॥**

**पञ्चम्या अत् ॥ ३१ ॥**

**एकवचनस्य च ॥ ३२ ॥**

---

१ प. पुस्तके इतः परमधिकम् । एत्त्वं भिसि परत्वाच्चेदत ऐस्क भविष्यति । कृत एत्त्वे भौतपूर्व्यात् । ऐस्तु नित्यस्तथा सति । २ प. पुस्तके इतः परमधिकम् । औशघौ । अस्तु लुक्तत्र । षड्भ्योऽप्येवं प्रसज्यते । अपवादः । यस्य विषये । चो वा तस्मादनन्तरः । आत्वं यत्र तु तत्रौत्त्वम् । तथा ह्यस्य महः कृतः । ३ प. पुस्तके इतः परमधिकम् । कृते ह्यत्वे न लुग्भवेत् । ४ बोथलिंग पुस्तके नः इति पाठः ।

**साम आकम् ॥ ३३ ॥**

१ साम्ग्रहणं यथागृहीतस्यादेशवचनात् ।

२ न वा द्विपर्यन्तानामकारवचनादामिसकाराभावः ।

३ सुट्प्रतिषेधस्त्वादेशे लोपविज्ञानात् ।

४ न वा टिलोपवचनादादेशे टाप्प्रतिषेधार्थम् ।

५ न वा लिङ्गाभावाट्टिलोपवचनानर्थक्यम् ।

६ तस्मात्सुट्प्रतिषेधः ।

**आत औ णलः ॥ ३४ ॥**

**तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ ३५ ॥**

**विदेः शतुर्वसुः ॥ ३६ ॥**

१ विदेर्वसोः कित्त्वम् ।

**समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ३७ ॥**

१ ल्यबादेश उपदेशिवद्वचनम् ।

२ अनादिष्टार्थम् ।

३ बहिरङ्गलक्षणत्वात् ।

४ क्त्वात्वाकालकादिषु च प्रतिषेधः ।

५ तदन्तनिर्देशात्सिद्धम् ।

६ समासनिपातनाद्वा ।

७ अनञो वा परस्य ।

**क्त्वापि च्छन्दसि ॥ ३८ ॥**

**सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ३९ ॥**

१ इयाडियाजीकाराणामुपसंख्यानम्[१] ।

**अमो मश्[२] ॥ ४० ॥**

**लोपस्त आत्मनेपदेषु ॥ ४१ ॥**

**ध्वमो ध्वात् ॥ ४२ ॥**

**यजध्वैनमिति च ॥ ४३ ॥**

**तस्य तात् ॥ ४४ ॥**

**तप्तनप्तनथनाश्च ॥ ४५ ॥**

**इदन्तो मसि ॥ ४६**

**क्त्वो यक् ॥ ४७ ॥**

**इष्ट्वीनमिति च ॥ ४८ ॥**

**स्नात्व्यादयश्च ॥ ४९ ॥**

**अञ्जसेरसुक् ॥ ५० ॥**

**अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ५१ ॥**

१ अश्ववृषयोर्मैथुनेच्छायाम् ।

२ क्षीरलवणयोर्लालसायाम्[४] ।

**आमि सर्वनाम्नः सुट् ॥ ५२ ॥**

**त्रेस्त्रयः ॥ ५३ ॥**

**ह्रस्वनद्यापो नुट् ५४ ॥**

**षट्चतुर्भ्यश्च ॥ ५५ ॥**

**श्रीग्रामण्योश्छन्दसि ॥ ५६ ॥**

**गोः पादान्ते ॥ ५७ ॥**

**इदितो नुम् धातोः ॥ ५८ ॥**

---

१ प. पुस्तके इतः परमधिकम् । सुपां च सुपो भवन्तीति वाच्यम् । तिङां च तिङो भवन्तीति वाच्यम् । २ प. पुस्तके इतः परमधिकम् । आङ्याजयारां चोपसंख्यानम् । ३ प. पुस्तके इतः परमधिकम् । अमो मश्च मकारस्य । वचनादन्यबाधनम् । द्विमकार ईड्पृक्ते यकारादौ न दुष्यति । ४ प. पुस्तके इतः परमधिकम् । सर्वप्रातिपदिकेभ्यो लालसायामिति वक्तव्यं दध्यस्यति मध्वस्यतीत्येवमर्थम् । सुग्वक्तव्यो दधिस्यति मधुस्यतीत्येवमर्थम् ।

१ नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थम् ।
२ इतरथा ह्यनकारे प्रत्ययः ।
३ तत्रायथेष्टप्रसङ्गः ।
४ धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुम्विधानम् ।

**शे मुचादीनाम् ॥ ५९ ॥**

१ शे तृम्पादीनाम् ।
२ लुप्तनकारत्वात् ।

**मस्जिनशोर्झलि ॥ ६० ॥**

**रधिजभोरचि ॥ ६१ ॥**

**नेट्यलिटि रधेः ॥ ६२ ॥**

**रभेरशब्लिटोः ॥ ६३ ॥**

**लभेश्च ॥ ६४ ॥**

**आङो यि ॥ ६५ ॥**

**उपात्प्रशंसायाम् ॥ ६६ ॥**

**उपसर्गात्खल्घञोः ॥ ६७॥**

**न सुदुर्भ्यां केवलाभ्याम् ॥ ६८ ॥**

१ सुदुरोः केवलग्रहणमन्योपसर्गप्रतिषेधार्थम् ।

**विभाषा चिण्णमुलोः ॥ ६९ ॥**

१ चिण्णमुलोरनुपसर्गस्य ।

**उगिदचां सर्वनामस्थानेऽधातोः ॥७०॥**

१ उगित्यञ्चतिग्रहणात्सिद्धमधातोः ।

**युजेरसमासे ॥ ७१ ॥**

**नपुंसकस्य झलचः ॥ ७२ ॥**

१ झलचो नुम्विधावुगित्प्रतिषेधः ।
२ विप्रतिषेधात्सिद्धम् ।
३ पुनःप्रसङ्ग इति चेदमादिभिस्तुल्यम् ।
४ तत्र बहूर्जि प्रतिषेधः ।
५ अन्त्यात्पूर्वं नुममेके ।

**इकोऽचि विभक्तौ[1] ॥ ७३ ॥**

१ इकोऽचि विभक्तावज्ग्रहणं नुम्नुटोर्विप्रतिषेधार्थम् ।
२ इतरथा हि नुमो नित्यनिमित्तत्वान्नुडभावः ।
३ उत्तरार्थं च ।

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ॥ ७४ ॥**

१ पुंवदिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौ-स्त्वप्रतिषेधः ।
२ ह्रस्वाभावार्थं च ।
३ अर्थातिदेशात्सिद्धम् ।
४ तद्धितलुक्प्रतिषेधश्च ।
५ न वा समानायामाकृतौ भाषितपुंस्कविज्ञानात् ।

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥७५॥**

**छन्दस्यपि दृश्यते ॥ ७६ ॥**

**ई च द्विवचने ॥ ७७ ॥**

**नाभ्यस्ताच्छतुः ॥ ७८ ॥**

**वा नपुंसकस्य ॥ ७९ ॥**

**आच्छीनद्योर्नुम् ॥ ८० ॥**

**शप्श्यनोर्नित्यम् ॥ ८१ ॥**

**सावनडुहः ॥ ८२ ॥**

---

१ प. पुस्तके इतः परमधिकम् । इकोऽचि व्यञ्जने मा भूत् । अस्तुलोपः । स्वरः कथनम् । स्वरो वै श्रूयमाणेऽपि । लुप्ते किं न भविष्यति ।

१ अनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वात् ।
२ न वावर्णोपधस्य नुम्वचनात् ।
३ पुनःप्रसङ्गविज्ञानाद्वा सिद्धम् ।
४ यथात्वादिषु द्विर्वचनम् ।

**दृक्स्ववःस्वतवसां छन्दसि ॥ ८३ ॥**

**दिव औत् ॥ ८४ ॥**

१ दिव औत्वे धातुप्रतिषेधः[१] ।
२ अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषः ।
३ उक्तं[२] वा ।

**पथिमथ्यृभुक्षामात् ॥ ८५ ॥**

**इतोऽत् सर्वनामस्थाने ॥ ८६ ॥**

१ इतोऽद्वचनमनर्थकम्[३]आकारप्रकरणात् ।
२ षपूर्वार्थं तु ।

**थो न्थः ॥ ८७ ॥**

**भस्य टेर्लोपः ८८ ॥**

**पुंसोऽसुङ् ॥ ८९ ॥**

१ असुङ्युपदेशिवद्वचनं स्वरासिद्ध्यर्थं बहिरङ्गलक्षणत्वात् ।

**गोतो णित् ॥ ९० ॥**

१ गोतः सर्वनामस्थाने णित्कार्यातिदेशः ।
२ सर्वनामस्थाने णित्त्ववचने ह्यसंप्रत्ययः षष्ठ्यनिर्देशात् ।
३ तपरकरणमनर्थकं स्थानिवत्प्रतिषेधात् ।
४ इतरथा हि संबुद्धिजसोः प्रतिषेधः ।

**णलुत्तमो वा ॥ ९१ ॥**

**सख्युरसंबुद्धौ ॥ ९२ ॥**

**अनङ् सौ ॥ ९३ ॥**

**ऋदुशनस्पुरुदंशोऽनेहसां च ॥ ९४ ॥**

**तृज्वत् क्रोष्टुः ॥ ९५ ॥**

**स्त्रियां च[४] ॥ ९६ ॥**

१ तृज्वदिति शास्त्रातिदेशश्चेद्यथा चिणि तद्वत् ।
२ तत्र रपरवचनम् ।
३ रूपातिदेश इति चेत्सर्वादेशप्रसङ्गः ।
४ सिद्धं तु रूपातिदेशात् ।
५ सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् ।
६ आन्तरतम्याच्च सिद्धम् ।
७ तृज्वद्वचनमनर्थकं तृज्विषये तृचो मृगवाचित्वात् ।
८ तुनो निवृत्त्यर्थमिति चेत्सिद्धं यथान्यत्रापि ।
९ वावचनानर्थक्यं च स्वभावसिद्धत्वात् ।
१० गुणवृद्ध्यौत्त्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिषिद्धम् ।
११ नुमचिरतृज्वद्भावेभ्यो नुट् ।
१२ न वा नुड्विषये रप्रतिषेधात् ।
१३ इतरथा हि सर्वापवादः ।
१४ तस्मान्नुड्विषये रप्रतिषेधः ।

**विभाषा तृतीयादिष्वचि ॥ ९७ ॥**

१ प. पुस्तके इतः परमाधिकम् । अधात्वधिकारात्सिद्धम् । २ प. पुस्तके नास्ति । ३ प पुस्तके 'मनर्थक' इति नास्ति । ४ प. पुस्तके इतः परमाधिकम् । तृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्रीभक्तिर्न सिध्यति । ईकारे तन्निमित्तः सः गौरादिषु न पठ्यते । तेनैव भावनं चेत्स्यादनिष्टोऽपि प्रसज्यते ।

**चतुरनडुहोरामुदात्तः ॥ ९८ ॥**

१ आमनडुहः स्त्रियां वा ।

**अम् संबुद्धौ ॥ ९९ ॥**

**ऋत इद्धातोः ॥ १०० ॥**

**उपधायाश्च ॥ १०१ ॥**

**उदोष्ठ्यपूर्वस्य ॥ १०२ ॥**

**बहुलं छन्दसि ॥ १०३ ॥**

॥ इति सप्तमाध्यायस्य प्रथमः पादः ॥

---

**सिचि वृद्धिः परस्मैपदेषु ॥ १ ॥**

१ सिचि वृद्धावोकारप्रतिषेधः[1] ।

२ ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्वाभावः ।

३ पुनः प्रसङ्गविज्ञानाद्वा सिद्धं यथा प्रसारणादिषु द्विर्वचनम् ।

४ सौढामित्रौ बहिरङ्गलक्षणत्वात्सिद्धम् ।

**अतो ल्रान्तस्य ॥ २ ॥**

**वदव्रजहलन्तस्याचः ॥ ३ ॥**

१ हल्ग्रहणमिटि प्रतिषेधार्थम् ।

२ नवानन्तरप्रतिषेधात् ।

३ तद्धानन्त्यार्थम् ।

४ अन्त्यस्य वचनानर्थक्यात् ।

५ अतो विभाषार्थमिति चेत्सिद्धं वृद्धेर्लोपबलीयस्त्वात्[3] ।

**नेटि ॥ ४ ॥**

**ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ५ ॥**

**ऊर्णोतेर्विभाषा ॥ ६ ॥**

**अतो हलादेर्लघोः ॥ ७ ॥**

**नेड्वशि कृति ॥ ८ ॥**

१ नेड्वश्यमनादौ कृति ।

**तितुत्रतथसिसुसरकसेषु च ॥ ९ ॥**

१ तितुत्रेष्वग्रहादीनाम् ।

**एकाच उपदेशेऽनुदात्तात् ॥ १० ॥**

१ एकाज्ग्रहणं जागर्त्यर्थम् ।

२ वध इट्प्रतिषेधः संनिपात एकाच्त्वात्प्रकृतेश्चानुदात्तत्वात् ।

३ एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्क्र्यादिभ्यो लिटि नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य ।

४ तत्र पचादिभ्य इड्वचनम् ।

५ सनश्चेट्प्रतिषेधः ।

६ उभयविश्लेषणत्वात्सिद्धम् ।

७ यङ्लोपे च तदन्तद्विर्वचनात् ।

**श्र्युकः किति ॥ ११ ॥**

**सनि ग्रहगुहोश्च ॥ १२ ॥**

**कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ १३ ॥**

१ क्रोऽसुटः ।

**श्वीदितो निष्ठायाम् ॥ १४ ॥**

१ श्विग्रहणमिदन्तत्वादुपदेशस्य ।

---

१ प. पुस्तके इतः परमधिकम् । इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन । २ प. पुस्तके इतः परमधिकम् । ओकाराद्वृद्धिर्विप्रतिषेधेन । ३ प. पुस्तके इतः परमधिकम् । एकाचस्तौ बलीनि वा ।

**यस्य विभाषा ॥ १५ ॥**

१ यस्य विभाषाविदेः ।

**आदितश्च ॥ १६ ॥**

**विभाषा भावादिकर्मणोः ॥ १७ ॥**

**क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥ १८ ॥**

१ क्षुब्धं मन्थाभिधाने ।

२ स्वान्तं मनोऽभिधाने ।

३ ध्वान्तं तमोऽभिधाने ।

**धृषिशसी वैयात्ये ॥ १९ ॥**

**दृढः स्थूलबलयोः २० ॥**

१ दृढनिपातनं नकारहकारलोपार्थं परस्य च ढत्वार्थम् ।

२ अनिड्वचने हि रभावाप्रसिद्धिरलघुत्वात् ।

३ नलोपवचनं च ।

**प्रभौ परिवृढः ॥ २१ ॥**

१ परिवृढनिपातनं च ।

**कृच्छ्रगहनयोः कषः ॥ २२ ॥**

**घुषिरविशब्दने ॥ २३ ॥**

**अर्देः संनिविभ्यः ॥ २४ ॥**

**अभेश्चाविदूर्ये ॥ २५ ॥**

**णेरध्ययने वृत्तम् ॥ २६ ॥**

१ वृत्तनिपातने णिग्रहणमण्यन्तस्यावधारणप्रतिषेधार्थम् ।

२ निपातनं णिलोपेड्गुणप्रतिषेधार्थम् ।

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ २७ ॥**

१ दान्तशान्तयोरुपधादीर्घत्वं च ।

२ स्पष्टच्छन्नयोरुपधाह्रस्वत्वं च ।

**रुष्यमत्वरसंघुषास्वनाम् ॥ २८ ॥**

१ घुषिस्वनोर्वावचनमिट्प्रतिषेधाद्धिप्रतिषेधेन ।

**हृषेर्लोमसु ॥ २९ ॥**

**अपचितश्च ॥ ३० ॥**

**हु ह्वरेश्छन्दसि ॥ ३१ ॥**

**अपरिह्वृताश्च ॥ ३२ ॥**

**सोमे ह्वरितः ॥ ३३ ॥**

**ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलिति क्षरिति क्षमिति वमित्यमितीति च ॥ ३४ ॥**

**आर्धधातुकस्येड्वलादेः ॥ ३५ ॥**

**स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ३६ ॥**

१ स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसंख्यानम् ।

२ आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधः ।

३ सिद्धं तु स्नोरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् ।

४ क्रमेश्च ।

५ कर्तरि चात्मनेपदविषयात्कृति ।

**ग्रहोऽलिटि दीर्घः ॥ ३७ ॥**

१ ग्रहेर्दीर्घत्व इड्ग्रहणम् ।

२ अग्रहणे ह्यसंप्रत्ययः षष्ठ्यभावात् ।

---

१ प. पुस्तके इतः परमाधिकम् । हृषेर्लोमकेशकर्तृकस्येति वक्तव्यम् । विस्मितप्रतीघातयोरिति वक्तव्यम् । किनि नित्यमिति वक्तव्यम् ।

३ चिण्वदिटः प्रतिषेधः ।

४ यङ्लोपे च ।

५ इड्दीर्घे इति चेद्विप्रतिषिद्धम् ।

६ प्रतिषिद्धस्य च पुनर्विधाने दीर्घत्वाभावः।

७ यङ्लोपे [1]चोक्तम् ।

**वॄतो वा ॥ ३८ ॥**

**न लिङि ॥ ३९ ॥**

**सिचि च परस्मैपदेषु ॥ ४० ॥**

**इट् सनि वा ॥ ४१ ॥**

**लिङ्सिचोरात्मनेपदेषु ॥ ४२ ॥**

**ऋतश्च संयोगादेः ॥ ४३ ॥**

**स्वरतिसूतिसूयतिधूञूदितो वा ॥ ४४ ॥**

१ पुनर्वावचनं लिङ्सिचोर्निवृत्त्यर्थम् ।

२ स्वरतिरुदात्तः ।

३ वावचनं निवृत्त्यर्थम् ।

४ अनुदात्ते हि किति वाप्रसङ्गः प्रतिषिध्य पुनर्विधानात् ।

**रधादिभ्यश्च ॥ ४५ ॥**

**निरः कुषः ॥ ४६ ॥**

**इण्निष्ठायाम् ॥ ४७ ॥**

१ इड्ग्रहणं नित्यार्थम् ।

**तीषसहलुभरुषरिषः॥ ४८ ॥**

१ इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः ।

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ ४९ ॥**

**क्लिशः क्त्वानिष्ठयोः ॥ ५० ॥**

**पूङश्च ॥ ५१ ॥**

**वसतिक्षुधोरिट् ॥ ५२ ॥**

१ पुनरिड्ग्रहणं नित्यार्थम् ।

**अञ्चेः पूजायाम् ॥ ५३ ॥**

**लुभो विमोहने ॥ ५४ ॥**

**जॄव्रश्च्योः क्त्वि ॥ ५५ ॥**

**उदितो वा ॥ ५६ ॥**

**सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ ५७ ॥**

**गमेरिट् परस्मैपदेषु ॥ ५८ ॥**

१ गमेरिट्परस्मैपदेषु चेत्कृत्युपसंख्यानम् ।

२ आत्मनेपदपरप्रतिषेध [2]उक्तम् ।

३ सिद्धं तु गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् ।

**न वृद्भ्यश्चतुर्भ्यः ॥ ५९ ॥**

१ वृतादिप्रतिषेधे च[3] ।

२ आत्मनेपदपर इड्वचने तत्परपरसीयुडेकादेशेष्विड्वचनम् ।

३ सिद्धं तु वृतादीनामात्मनेपदेन समानपदस्थस्येड्वचनात् ।

४ चतुस्तासिक्लृपिग्रहणानर्थक्यं च ।

५ निवृत्तत्वात्सकारस्य ।

**तासि च क्लृपः ॥ ६० ॥**

**अचस्तास्वत् थल्यनिटो नित्यम् ।६१।**

**उपदेशेऽत्वतः ॥ ६२ ॥**

१ तासावत्वतप्रतिषेधे घसेः प्रतिषेधप्रसङ्गोऽकारवत्त्वात् ।

२ सिद्धं तु हलादिग्रहणात् ।

३ तस्य चाभावात्तासौ ।

१–२ प. पुस्तके नास्ति । ३ प. पुस्तके कृत्युपसंख्यानम् इत्यधिकम् ।

ऋतो भारद्वाजस्य ॥ ६३ ॥

१ ऋतो भारद्वाजस्येति नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य।

२ तत्र पचादिभ्य इड्वचनम्।

३ योगविभागात्सिद्धम्।

बभूथा ततन्थ जगृभ्म ववर्थेति निगमे ॥ ६४ ॥

विभाषा सृजिदृशोः ॥ ६५ ॥

इडत्त्यर्तिव्ययतीनाम् ॥ ६६ ॥

वस्वेकाजाद्घसाम् ॥ ६७ ॥

१ वस्वेकाजाद्घसांवचनं नियमार्थम्।

२ घसिग्रहणमनच्कत्वात्।

विभाषा गमहनविदविशाम् ॥ ६८ ॥

सनिं ससनिवांसम् ॥ ६९ ॥

ऋद्धनोः स्ये ॥ ७० ॥

१ स्वरतेर्वेट्त्वादृतः स्ये विप्रतिषेधेन।

अञ्जेः सिचि ॥ ७१ ॥

स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७२ ॥

यमरमनमातां सक् च ॥ ७३ ॥

स्मिपूङ्रञ्ज्वशां सनि ॥ ७४ ॥

किरश्च पञ्चभ्यः ॥ ७५ ॥

रुदादिभ्यः सार्वधातुके ॥ ७६ ॥

ईशः से ॥ ७७ ॥

ईडजनोर्ध्वे च ॥ ७८ ॥

लिङः सलोपोऽनन्त्यस्य ॥ ७९ ॥

अतो येयः ॥ ८० ॥

आतो ङितः ॥ ८१ ॥

आने मुक् ॥ ८२ ॥

१ मुकि स्वरे दोषः।

२ अभक्ते च।

३ परादौ दीर्घप्रसङ्गः।

ईदासः ॥ ८३ ॥

अष्टन आ विभक्तौ ॥ ८४ ॥

१ अष्टन्जनादिपाथिमथ्यात्त्वेष्वान्तरतम्यादनुनासिकप्रसङ्गः।

२ सिद्धमनण्त्वात्।

३ उच्चारणसामर्थ्याद्वा।

रायो हलि ॥ ८५ ॥

युष्मदस्मदोरनादेशे ॥ ८६ ॥

द्वितीयायां च ॥ ८७ ॥

प्रथमायाश्च द्विवचने भाषायाम् ॥ ८८ ॥

योऽचि ॥ ८९ ॥

शेषे लोपः ॥ ९० ॥

मपर्यन्तस्य ॥ ९१

युवावौ द्विवचने ॥ ९२ ॥

यूयवयौ जसि ॥ ९३ ॥

त्वाहौ सौ ॥ ९४ ॥

तुभ्यमह्यौ ङयि ९५ ॥

तवममौ ङसि ॥ ९६ ॥

त्वमावेकवचने ॥ ९७ ॥

प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥

१ त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणम्।

त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ९९ ॥

१ तिसृभावे संज्ञायां कन्युपसंख्यानम्।

२ चतसर्याद्युदात्तनिपातनं च।

१ प. पु इतः परमधिकम्। दृशोश्चेति वक्तव्यम्। २ प. पुस्तके °विशेषणत्वात्।

३ उपदेशिवद्वचनं च ।

४ स्वरसिद्ध्यर्थम् ।

५ उक्तं वा ।[1]

**अचि र ऋतः ॥ १०० ॥**

१ अचि रादेशे जस्युपसंख्यानं गुणपरत्वात् ।

२ न वानवकाशत्वाद्रस्य ।[2]

**जराया जरसन्यतरस्याम् ॥ १०१ ॥**

**त्यदादीनामः १०२ ॥**

१ त्यदादीनां द्विपर्यन्तानामकारवचनम् ।

**किमः कः १०३ ॥**

**कु तिहोः ॥ १०४ ॥**

**क्वाति ॥ १०५ ॥**

**तदोः सः सावनन्त्ययोः ॥ १०६ ॥**

**अदस औ सुलोपश्च[3] ॥ १०७ ॥**

१ सावौत्वप्रतिषेधः साकच्काद्वा सादुत्वं च ।

२ उत्तरपदभूतानामादेश उपदेशिवद्वचनम् ।

३ अनादिष्टार्थम् ।

४ बहिरङ्गलक्षणत्वात् ।

**इदमो मः ॥ १०८ ॥**

**दश्च ॥ १०९ ॥**

**यः सौ ॥ ११० ॥**

**इदो ऽय् पुंसि ॥ १११ ॥**

**अनाप्यकः ॥ ११२ ॥**

**हलि लोपः ॥ ११३ ॥**

**मृजेर्वृद्धिः ॥ ११४ ॥**

१ मृजेर्वृद्धिविधौ क्विप्रतिषेधः ।

२ धातोः स्वरूपग्रहणे वा तत्प्रत्ययविज्ञानात्सिद्धम् ।

३ प्रयोजनं सृजिदृशिमस्जिनशिहन्तिगिरत्यर्थम् ।

**अचो ञ्णिति ॥ ११५ ॥**

१ वृद्धावज्ग्रहणं गोऽर्थम् ।

२ योगविभागः सखिव्यञ्जनाद्यर्थः

**अत उपधायाः ॥ ११६ ॥**

**तद्धितेष्वचामादेः ॥ ११७ ॥**

१ तद्धितेष्वचामादिवृद्धावन्त्योपधालक्षणप्रतिषेधः ।

२ लोकविज्ञानात् सिद्धम् ।

३ पुष्करसद्ग्रहणाद्वा ।

**किति च[4] ॥ ११८ ॥**

॥ इति सप्तमाध्यायस्य द्वितीयः पादः ॥

---

१-२ प. पुस्तके नास्ति । ३ प. पुस्तके इतः परमधिकम् । त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः शेषे लोपस्य लोपेन ज्ञायते प्राक्तोऽददिति । अपि वोपसमस्तार्थमत्वाभावात्कृतं भवेत् । टिलोपष्टाबभावार्थः कर्तव्य इति तत्स्मृतम् । अथवा शेषसप्तम्या शेषेलोपो विधीयते । लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः अदसः सोर्भवेदौत्त्वं किं सुलोपो विधीयते । ह्रस्वाल्लुप्येत संबुद्धिः । न हलः । प्रकृतं हि तत् । आप एत्त्वं भवेत्तस्मिन् । न झलीत्यनुवर्तनात् । प्रत्ययस्थाच्च कादित्वम् । शीभावश्च प्रसज्यत । ४ वै. बा. नि. सिचि प्रभाविद् सन्यचस्तास्वदातो जराया अष्टादश ।

**देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥ १ ॥**

१ देविकादिषु तदादिग्रहणम् ।

२ अन्यत्र तद्ग्रहणात्तदन्तग्रहणाद्वा ।

३ आद्यज्विशेषणत्वाद्वा सिद्धम् ।

४ आन्तरतम्यनिवर्तकत्वाद्वा ।

५ न्यग्रोधे च केवलग्रहणात् ।

६ वहीनरस्यैद्वचनम् ।

**केकयमित्रयुप्रलयानां यादेरियः ॥ २ ॥**

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ३ ॥**

१ ऐचोर्विषयार्थं प्रतिषेधसंनियुक्तवचनम्[1] ।

२ शौकलायावादेशेषु चोक्तम् ।

**द्वारादीनां च ॥ ४ ॥**

**न्यग्रोधस्य च केवलस्य ॥ ५ ॥**

**न कर्मव्यतिहारे ॥ ६ ॥**

**स्वागतादीनां च ॥ ७ ॥**

**श्वादेरिञि ॥ ८ ॥**

१ प्रतिषेधे श्वादिग्रहणं ज्ञापकमन्यत्र श्वन्ग्रहणे तदादिग्रहणस्य [3]शौवहानाद्यर्थम् ।

२ इकारादिग्रहणं च श्वागणिकाद्यर्थम् ।

३ तदन्तस्य चान्यत्र प्रतिषेधः ।

**पदान्तस्यान्यतरस्याम् ॥ ९ ॥**

**उत्तरपदस्य ॥ १० ॥**

१ तद्धितेष्वचामादिवृद्धेरुत्तरपदवृद्धिर्विप्रतिषेधेन द्व्याशीतिकाद्यर्थम् ।

**अवयवादृतोः ॥ ११ ॥**

**सुसर्वार्धाज्जनपदस्य ॥ १२ ॥**

**दिशोऽमद्राणाम् ॥ १३ ॥**

**प्राचां ग्रामनगराणाम् ॥ १४ ॥**

**संख्यायाः संवत्सरसंख्यस्य च ॥ १५ ॥**

१ संवत्सरग्रहणमनर्थकं परिमाणान्तस्येति[5] कृतत्वात् ।

२ ज्ञापकं तु कालपरिमाणानां वृद्धिप्रतिषेधस्य ।

**वर्षस्याभविष्यति ॥ १६ ॥**

**परिमाणान्तस्यासंज्ञाशाणयोः ॥ १७ ॥**

**जे प्रोष्ठपदानाम् ॥ १८ ॥**

**हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ १९ ॥**

**अनुशतिकादीनां च ॥ २० ॥**

**देवताद्वन्द्वे च ॥ २१ ॥**

**नेन्द्रस्य परस्य ॥ २२ ॥**

**दीर्घाच्च वरुणस्य ॥ २३ ॥**

**प्राचां नगरान्ते ॥ २४ ॥**

**जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ॥ २५ ॥**

**अर्धात्परिमाणस्य पूर्वस्य तु वा ॥ २६ ॥**

**नातः परस्य ॥ २७ ॥**

**प्रवाहणस्य ढे ॥ २८ ॥**

१ प. पुस्तके इतः परमधिकम् । य्वाभ्यां परस्यावृद्धित्वम् । अपवादौ वृद्धेर्हि तौ । नित्यावैचा तयोर्वृद्धिः किमर्थं नेति शिष्यते । २ प. पुस्तके इतः परमधिकम् । यत्र य्वाभ्यां परावृद्धिस्तत्राध्यर्ध्येयंथा न तौ । आचामादेर्य्वाभ्यां हि तौ । कथं द्व्याशीतिके न तौ । यत्र वृद्धिरचामादेस्तत्रैचावत्र य्वोर्हि सा । अथ कस्मात् पदान्ताभ्याम् । यथैणो न भवेद्यणः । ३ प. पुस्तके नास्ति । ४ प. पुस्तके °द्वान्यर्थमिति पाठः । ५ प. पुस्तके परिमाणाग्रहणस्य एतदधिकम् ।

**तत्प्रत्ययस्य च ॥ २९ ॥**

**नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥ ३० ॥**

**यथातथयथापुरयोः पर्यायेण ॥ ३१ ॥**

**हनस्तो ऽचिण्णलोः ॥ ३२ ॥**

१ हन्तेस्तकारे तद्धिते प्रतिषेधः ।

२ उक्तं[1] वा ।

**आतो युक् चिण्कृतोः ॥ ३३ ॥**

**नोदात्तोपदेशस्य मान्तस्यानाचमेः[2]॥३४॥**

**जनिवध्योश्च ॥ ३५ ॥**

**अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ॥ ३६ ॥**

**शाछासाह्वाव्यावेपां युक् ॥ ३७ ॥**

१ णिच्प्रकरणे धूञ्प्रीणोर्नुग्वचनम् ।

२ पातेर्लुग्वचनम् ।

**वो विधूनने जुक् ॥ ३८ ॥**

**लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥ ३९ ॥**

**भियो हेतुभये षुक् ॥ ४० ॥**

**स्फायो वः ४१ ॥**

**शदेरगतौ तः ॥ ४२ ॥**

**रुहः पोऽन्यतरस्याम् ॥ ४३ ॥**

**प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ॥ ४४ ॥**

१ इत्त्वे कग्रहणं संघातग्रहणं चेदेतिकास्वप्राप्तिः ।

२ वर्णग्रहणं चेद्व्याहितत्वादप्रसिद्धिः ।

३ वचनप्रामाण्यादिति चेद्रथकट्यादिष्वतिप्रसङ्गः ।

४ ममकनरकयोरुपसंख्यानमप्रत्ययस्थत्वात् ।

५ त्यक्त्यपोश्च प्रतिषिद्धत्वात् ।

**न यासयोः ॥ ४५ ॥**

१ प्रतिषेधे त्यकन उपसंख्यानम् ।

२ पावकादीनां छन्दस्युपसंख्यानम् ।

३ आशिषि च ।

४ उत्तरपदलोपे च ।

५ क्षिपकादीनां च ।

६ तारका ज्योतिषि ।

७ वर्णका तान्तवे ।

८ वर्तका शकुनौ प्राचाम् ।

९ अष्टका पितृदैवत्ये ।

१० वा सूतकापुत्रकावृन्दारकाणाम् ।

**उदीचामातः स्थाने यकपूर्वायाः ॥४६॥**

१ यकपूर्वे[3] धात्वन्तप्रतिषेधः ।

**भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ॥ ४७ ॥**

१ भस्त्राग्रहणमुपसर्जनार्थम् ।

२ नञ्पूर्वग्रहणानर्थक्यं चोत्तरपदमात्रस्येद्वचनात् ।

**अभाषितपुंस्काच्च ॥ ४८ ॥**

**आदाचार्याणाम् ॥ ४९ ॥**

**ठस्येकः ॥ ५० ॥**

१ ठादेशे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः।

२ संघातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेधः ।

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमाधिकम् । अवमिकमिचमीनामिति वक्तव्यम् । ३ प. पुस्तके °पर्वत्वे इति पाठः ।

३ तस्माद्द्विशिष्टग्रहणम् ।

इसुसुक्तान्तात् कः ॥ ५१ ॥

चजोः कु घिण्ण्यतोः ॥ ५२ ॥

न्यङ्क्वादीनां च ॥ ५३ ॥

हो हन्तेर्ञ्णिन्नेषु ॥ ५४ ॥

१ हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः ।

२ हकारस्येति चेञ्ञ्णित्यप्राप्तिः ।

३ स्थानिवद्भावाच्चाचो नकारेऽप्रसिद्धिः ।

४ वचनप्रामाण्यादिति चेदल्लोपे प्रतिषेधः ।

५ सिद्धं तूपधालोप इति वचनात् ।

अभ्यासाच्च ॥ ५५ ॥

१ अभ्यासात्कुत्वमसुपः ।

हेरचङि ॥ ५६ ॥

१ हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात् ।

२ ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वविज्ञानार्थम् ।

सन्लिटोर्जेः ॥ ५७ ॥

१ जिग्रहणे ज्यः प्रतिषेधः ।

विभाषा चेः ॥ ५८ ॥

न क्वादेः ॥ ५९ ॥

१ क्वयजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात् ।

२ शुच्युब्ज्योर्घञि कुत्वम् ।

३ अर्चेः कविधानात्सिद्धम् ।

अजिव्रज्योश्च ॥ ६० ॥

भुजन्युब्जौ पाण्युपतापयोः ॥ ६१ ॥

१ भुजः पाणौ ।

२ न्युब्जेः कर्तृत्वादप्रतिषेधः ।

प्रयाजानुयाजौ यज्ञाङ्गे ॥ ६२ ॥

वञ्चेर्गतौ ॥ ६३ ॥

ओक उचः के ॥ ६४ ॥

ण्य आवश्यके ॥ ६५ ॥

यजयाचरुचप्रवचर्चश्च ॥ ६६ ॥

१ प्रवचिग्रहणमनर्थकं वचोऽशब्दसंज्ञाभावात् ।

२ उपसर्गपूर्वनियमार्थमिति चेदविवाक्यस्य विशेषवचनात्सिद्धम् ।

३ ण्यप्रतिषेधे त्यजेरुपसंख्यानम् ।

वचो ऽशब्दसंज्ञायाम् ॥ ६७ ॥

प्रयोज्यनियोज्यौ शक्यार्थे ॥ ६८ ॥

भोज्यं भक्ष्ये ॥ ६९ ॥

१ भोज्यमभ्यवहार्ये ।

घोर्लोपो लेटि वा ॥ ७० ॥

ओतः श्यनि ॥ ७१ ॥

१ ओतः शिति ।

२ उत्तरत्र शिद्ग्रहणाभावाय ।

क्सस्याचि ॥ ७२ ॥

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७३ ॥

शमामष्टानां दीर्घः श्यनि ॥ ७४ ॥

ष्ठिवुक्लमुचमां शिति ॥ ७५ ॥

१ दीर्घत्वमाङि चमः ।

क्रमः परस्मैपदेषु ॥ ७६ ॥

इषुगमियमां छः ॥ ७७ ॥

१ इषेश्छत्वमहालि ।

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७८ ॥

१ पिबेर्गुणप्रतिषेधः ।

२ अदन्त इति चेदुक्तम् ।

**ज्ञाजनोर्जा ॥ ७९ ॥**

**प्वादीनां ह्रस्वः ॥ ८० ॥**

**मीनातेर्निगमे ॥ ८१ ॥**

**मिदेर्गुणः ॥ ८२ ॥**

**जुसि च ॥ ८३ ॥**

१ जुसि गुणे यासुट्प्रतिषेधः ।

**सार्वधातुकार्धधातुकयोः ॥ ८४ ॥**

**जाग्रो ऽविचिण्णल्ङित्सु ॥ ८५ ॥**

१ चिण्णलोः प्रतिषेधसामर्थ्यादन्यत्र गुणभूतस्य वृद्धिप्रतिषेधः ।

२ प्रसज्यप्रतिषेधे जुसिगुणप्रतिषेधप्रसङ्गः।

३ उत्तमे च णलि ।

४ न वानन्तरस्य प्रतिषेधात् ।

५ जुसि पूर्वेण गुणविधानम् ।

६ णलि च ।

७ अतोऽन्यत्र विधाने वावगुणत्वम् ।

८ न वा पर्युदाससामर्थ्यात् ।

९ वस्वर्थमिति चेन्न सार्वधातुकत्वात्सिद्धम् ।

**पुगन्तलघूपधस्य च[२] ॥ ८६ ॥**

**नाभ्यस्तस्याचि पिति सार्वधातुके । ८७ ।**

१ अभ्यस्तानामुपधाह्रस्वत्वमाचि, पस्पशाते चाकशीमि वावशतीरिति दर्शनात् ।

२ बहुलं छन्दस्यानुषग्जुजोषदिति दर्शनात् ।

**भूसुवोस्तिङि ॥ ८८ ॥**

१ भूसुवोः प्रतिषेध एकाज्ग्रहणं बोभवीत्यर्थम् ।

**उतो वृद्धिर्लुकि हलि ॥ ८९ ॥**

**ऊर्णोतेर्विभाषा ॥ ९० ॥**

**गुणो ऽपृक्ते ॥ ९१ ॥**

**तृणह इम् ॥ ९२ ॥**

१ तृणहिग्रहणं श्नमिमोऽर्थवस्थार्थम् ।

२ तृहिग्रहणे हीम्विषये श्नमभावोऽनवकाशत्वात् ।

**ब्रुव ईट् ॥ ९३ ॥**

**यङो वा ॥ ९४ ॥**

**तुरुस्तुशम्यमः सार्वधातुके ॥ ९५ ॥**

१ पुनः सार्वधातुकग्रहणमपिदर्थम् ।

**अस्तिसिचो ऽपृक्ते ॥ ९६ ॥**

**बहुलं छन्दसि ॥ ९७ ॥**

**रुदश्च पञ्चभ्यः ॥ ९८ ॥**

**अड्गार्ग्यगालवयोः ॥ ९९ ॥**

**अदः सर्वेषाम् ॥ १०० ॥**

**अतो दीर्घो यञि ॥ १०१ ॥**

**सुपि च ॥ १०२ ॥**

**बहुवचने झल्येत् ॥ १०३ ॥**

१ अतो दीर्घाद्बहुवचन एत्वं विप्रतिषेधेन ।

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति । विध्यपेक्षं लघोश्चासौ । कथं कुण्डिर्न दुष्यति । धातोर्नुमः । कथं रञ्जेः । स्यन्दिश्रन्थ्योर्निपातनात् । अनङ्गपशिदीर्घत्व विध्यपेक्षे न सिध्यतः । अभ्यस्तस्य यदाहाचि । लङ्थ तत्कृतं भवेत् ।

**ओसि च ॥ १०४ ॥**

**आङि चापः ॥ १०५ ॥**

**संबुद्धौ च ॥ १०६ ॥**

**अम्बार्थनद्योर्ह्रस्वः[1] १०७ ॥**

**ह्रस्वस्य गुणः ॥ १०८ ॥**

**जसि च ॥ १०९ ॥**

१ जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः ।

२ अम्बे दर्वि शतक्रत्वः पश्वे नृभ्यः किकिदीव्या ।

**ऋतो ङिसर्वनामस्थानयोः ॥ ११० ॥**

**घेर्ङिति ॥ १११ ॥**

१ घेर्ङिति गुणविधाने ङीसार्वधातुके प्रतिषेधः ।

२ सुबधिकारात्सिद्धम् ।

**आण्नद्याः ॥ ११२ ॥**

**याडापः ॥ ११३ ॥**

१ याड्विधानेऽतिखट्वायेत्यप्रतिषेधो ह्रस्वादेशत्वात् ।

**सर्वनाम्नः स्याड्ढ्रस्वश्च ॥ ११४ ॥**

**विभाषा द्वितीयातृतीयाभ्याम् ॥ ११५ ॥**

**ङेराम् नद्याम्नीभ्यः ॥ ११६ ॥**

१ इदुद्भ्यामाम्विधानमौत्त्वस्य परत्वात् ।

२ योगविभागात्सिद्धम् ।

**इदुद्भ्याम् ॥ ११७ ॥**

**औत् ॥ ११८ ॥**

**अच्च घेः ॥ ११९ ॥**

१ औत्त्वे योगविभागः ।

२ सखिपतिभ्यामौत्वार्थः ।

३ एकयोगे ह्यप्राप्तिरत्वसंनियोगात् ।

४ न वाकारस्यान्वाचयवचनाद्यथा क्यङि सलोपः ।

५ अत्त्वे टाप्प्रतिषेधः ।

६ न वा संनिपातलक्षणस्यानिमित्तत्वात् ।

७ डित्करणाद्वा ।

**आङो नास्त्रियाम् ॥ १२० ॥**

॥ इति सप्तमाध्यायस्य तृतीयः पादः ॥

---

**णौ चङ्युपधाया ह्रस्वः ॥ १ ॥**

१ णौ चङ्युपधाग्रहणमन्त्यप्रतिषेधार्थम् ।

२ उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम् ।

**नाग्लोपिशास्वृदिताम् ॥ २ ॥**

१ अग्लोपिप्रतिषेधानर्थक्यं च स्थानिवद्भावात् ।

**भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्[2] ॥ ३ ॥**

**लोपः पिबतेरीच्चाभ्यासस्य ॥ ४ ॥**

**तिष्ठतेरित् ॥ ५ ॥**

**जिघ्रतेर्वा ॥ ६ ॥**

**उर्ऋत् ॥ ७ ॥**

**नित्यं छन्दसि ॥ ८ ॥**

**दयतेर्दिगि लिटि ॥ ९ ॥**

---

१ प. पुस्तके इतः परमधिकम् । डलकवतीनां प्रतिषेधो वक्तव्यः । तल्ह्रस्वत्वं वा डिसंबुद्ध्योः अम्बार्थं ह्यक्षरं यदि । मातृणां मातच् पुत्रार्थमर्हते । २ प. पुस्तके इतः परमधिकम् । काण्यादीनां चेति वक्तव्यम् ।

१ दिग्यादेशस्य परत्वात्साभ्यासस्यादेशवचनम् ।

ऋतश्च संयोगादेर्गुणः ॥ १० ॥

१ संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम् ।

२ ऋतो लिटि गुणाञ्ञिणति वृद्धिर्विप्रतिषेधेन ।

३ पुनःप्रसङ्गविज्ञानाद्वा सिद्धम् ।

ऋच्छत्यॄताम् ॥ ११ ॥

शॄदॄप्रां ह्रस्वो वा ॥ १२ ॥

१ ऋतो ह्रस्वत्वमित्त्वप्रतिषेधार्थम् ।

केऽणः ॥ १३ ॥

१ केऽणो ह्रस्वत्वे तद्धितग्रहणं कृन्निवृत्त्यर्थम् ।

न कपि ॥ १४ ॥

आपो ऽन्यतरस्याम् ॥ १५ ॥

ऋदृशो ऽङि गुणः ॥ १६ ॥

अस्यतेस्थुक् ॥ १७ ॥

श्वयतेरः ॥ १८ ॥

पतः पुम् ॥ १९ ॥

वच उम् ॥ २० ॥

शीङः सार्वधातुके गुणः ॥ २१ ॥

अयङ् यि क्ङिति ॥ २२ ॥

उपसर्गाद्ध्रस्व ऊहतेः ॥ २३ ॥

एतेर्लिङि ॥ २४ ॥

१ एतेर्लिङ्युपसर्गात् ।

अकृत्सार्वधातुकयोर्दीर्घः ॥ २५ ॥

च्वौ च ॥ २६ ॥

रीङृतः ॥ २७ ॥

रिङ् शयग्लिङ्क्षु ॥ २८ ॥

गुणो ऽर्तिसंयोगाद्योः ॥ २९ ॥

यङि च ॥ ३० ॥

१ यङ्प्रकरणे हन्तेर्हिंसायामीट् ।

ई घ्राध्मोः ॥ ३१ ॥

अस्य च्वौ ॥ ३२ ॥

क्यचि च ॥ ३३ ॥

अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ॥ ३४ ॥

न च्छन्दस्यपुत्रस्य[1] ॥ ३५ ॥

१ छन्दसि प्रतिषेधे दीर्घप्रतिषेधः ।

२ न वाश्वाघस्याद्वचनमवधारणार्थम् ।

दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ॥३६॥

अश्वाघस्यात् ॥ ३७ ॥

देवसुम्नयोर्यजुषि काठके ॥ ३८ ॥

कव्यध्वरपृतनस्यर्चि लोपः ॥ ३९ ॥

द्यतिस्यतिमास्थामित्ति किति ॥ ४० ॥

शाछोरन्यतरस्याम् ॥ ४१ ॥

१ श्यतेरित्त्वं व्रते नित्यम् ।

दधातेर्हिः ॥ ४२ ॥

जहातेश्च क्त्वि ॥ ४३ ॥

विभाषा छन्दसि ॥ ४४ ॥

सुधित वसुधित नेमधित धिष्व धिषीय च ॥ ४५ ॥

दो दद्घोः[2] ॥ ४६ ॥

१ प. पुस्तके इतः परमधिकम् । अपुत्रादीनामिति वक्तव्यम् । २ प. पुस्तके इतः परमधिकम् न्ताते दोषो दीर्घत्वं स्यात् । तान्ते दोषो निष्ठानत्वम् । थान्ते दोषो धत्वप्राप्तिः । थान्तेऽदोषस्तस्मात् थान्तः

**अच उपसर्गात्तः ॥ ४७ ॥**

१ अच उपसर्गात्तत्व आकारग्रहणम् ।

२ आदेर्हि परस्य ।

३ अवर्णप्रकरणात्सिद्धम् ।

४ घतेरित्त्वादचस्तः ।

**अपो भि ॥ ४८ ॥**

१ अपो भि मासश्छन्दसि[1] ।

**सः स्यार्धधातुके ॥ ४९ ॥**

**तासस्त्योर्लोपः ॥ ५० ॥**

**रि च ॥ ५१ ॥**

**ह एति ॥ ५२ ॥**

**यीवर्णयोर्दीधीवेव्योः ॥ ५३ ॥**

**सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥**

१ इस्त्वं सनि राधो हिंसायाम् ।

**आप्ज्ञप्यृधामीत् ॥ ५५ ॥**

१ ज्ञपेरीत्त्वमनन्त्यस्य ।

**दम्भ इच्च ॥ ५६ ॥**

**मुचोऽकर्मकस्य गुणो वा ॥ ५७ ॥**

**अत्र लोपोऽभ्यासस्य ॥ ५८ ॥**

१ अभ्यासस्यानचि ।

**ह्रस्वः ॥ ५९ ॥**

**हलादिः शेषः ॥ ६० ॥**

१ हलादिशेषे षष्ठीसमास इति चेदजादिषु शेषप्रसङ्गः ।

२ कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तदभावे लोपवचनम् ।

३ तस्मादनादिलोपः ।

४ उक्तं वा ।

**शर्पूर्वाः खयः ॥ ६१ ॥**

१ शर्पूर्वशेषे खर्पूर्वग्रहणम् ।

२ आदिशेषप्रसङ्गस्तु ।

३ शर्पूर्ववचनं किमर्थमिति चेत्खयां लोपप्रतिषेधार्थम् ।

४ व्यपकर्षविज्ञानात्सिद्धम् ।

**कुहोश्चुः ॥ ६२ ॥**

**न कवतेर्यङि ॥ ६३ ॥**

**कृषेश्छन्दसि ॥ ६४ ॥**

**दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतो दविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्या गनीगन्तीति च ॥ ६५ ॥**

**उरत् ॥ ६६ ॥**

**द्युतिस्वाप्योः संप्रसारणम् ॥ ६७ ॥**

१ स्वापिग्रहणं व्यपेतार्थम् ।

२ तत्र क्यजन्तेऽतिप्रसङ्गः ।

३ सिद्धं तु णिज्ग्रहणात् ।

**व्यथो लिटि ॥ ६८ ॥**

**दीर्घ इणः किति ॥ ६९ ॥**

**अत आदेः ॥ ७० ॥**

**तस्मान्नुड् द्विहलः ॥ ७१ ॥**

**अश्नोतेश्च ॥ ७२ ॥**

**भवतेरः ॥ ७३ ॥**

**ससूवेति निगमे ॥ ७४ ॥**

**णिजां त्रयाणां गुणः श्लौ ॥ ७५ ॥**

१ प. पुस्तके इतः परमधिकम् । स्ववस्स्वतवसोर्मास उषसश्च त इष्यते । २ प. पुस्तके नास्ति ।

१ त्रिग्रहणानर्थक्यं तु गणान्तत्वात् ।
२ उत्तरार्थं तु ।
भृञामित् ॥ ७६ ॥
अर्तिपिपर्त्योश्च ॥ ७७॥
बहुलं छन्दसि ॥ ७८ ॥
सन्यतः ॥ ७९ ॥
ओः पुयण्ज्यपरे ॥ ८० ॥
स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ८१ ॥
गुणो यङ्लुकोः ॥ ८२ ॥
१ ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वादि परं दीर्घत्वम् ।
२ न वाभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात् ।
३ प्रयोजनं सन्वद्भावस्य दीर्घत्वम् ।
४ मान्प्रभृतीनां दीर्घत्वमित्त्वस्य ।
५ गणेरीत्वं हलादिशेषस्य ।
दीर्घो ऽकितः ॥ ८३ ॥
१ अकिद्वचनमन्यत्र किदन्तस्यालोऽन्त्यनिवृत्त्यर्थम् ।
२ प्रयोजनं ह्रस्वत्वात्वेत्त्वगुणेषु ।
३ विप्रतिषेधात्सिद्धम् ।
४ तदन्ताग्रहणाद्वा ।
नीग्वञ्चुस्रंसुध्वंसुभ्रंशुकसपतपदस्कन्दाम् ॥ ८४ ॥
नुगतो ऽनुनासिकान्तस्य ॥ ८५ ॥
१ नुकि यंयम्यते रंरम्यत इति रूपासिद्धिः ।
२ अनुस्वारागमवचनात्सिद्धम् ।
३ पदान्तवच्च ।
जपजभदहदशभञ्जपशां च ॥ ८६
चरफलोश्च ॥ ८७ ॥
उत्परस्यातः ॥ ८८ ॥
ति च ॥ ८९ ॥
रीगृदुपधस्य च ॥ ९० ॥
१ रीगृत्वतः संयोगार्थम् ।
रुग्रिकौ च लुकि ॥ ९१ ॥
१ मर्मृज्यते मर्मृज्यमानास इति चोपसंख्यानम् ।
ऋतश्च ॥ ९२ ॥
सन्वल्लघुनि चङ्परे ऽनग्लोपे ॥ ९३ ॥
१ सन्वद्भावदीर्घत्वे णेर्णिच्युपसंख्यानम् ।
२ मीमादीनां तु लोपप्रसङ्गः ।
३ सिद्धं तु रूपातिदेशात् ।
४ अङ्गान्यत्वाद्वा सिद्धम् ।
दीर्घो लघोः ॥ ९४ ॥
अत् स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ॥ ९५ ॥
विभाषा वेष्टिचेष्ट्योः ॥ ९६ ॥
ई च गणः ॥ ९७ ॥

॥ इति सप्तमाध्यायस्य चतुर्थः पादः ॥

---

## अष्टमोऽध्यायः ।

सर्वस्य द्वे ॥ १ ॥
१ सर्ववचनमलोऽन्त्यनिवृत्त्यर्थम् ।
२ षष्ठीनिर्देशार्थं च ।

---

१ प. पुस्तके °सर्वग्रहण° ।

३ अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः ।

४ न वा पदाधिकारात् ।

५ तच्च समासतद्धितवाक्यनिवृत्त्यर्थम् ।

६ सगतिग्रहणं च ।

**तस्य परमाम्रेडितम् ॥ २ ॥**

**अनुदात्तं च ॥ ३ ॥**

**नित्यवीप्सयोः ॥ ४ ॥**

१ अनवयवाभिधानं वीप्सार्थ इति चेज्जात्याख्यायां द्विर्वचनप्रसङ्गः ।

२ न वैकार्थत्वाज्जातेः ।

३ अनेकार्थाश्रयत्वाच्च वीप्सायाः ।

४ निवर्तकत्वाद्वा ।

५ सर्वपदसगतिग्रहणानर्थक्यं चार्थाभिधाने द्विर्वचनविधानात् ।

६ वीप्सायां सर्वाभिधाने वचनाप्रसिद्धिः ।

७ एकाभिधानेऽसर्वद्रव्यगतिः ।

८ न वा पदार्थत्वात् ।

**परेर्वर्जने ॥ ५ ॥**

१ परेरसमासे ।

२ परेर्वर्जने वावचनम् ।

**प्रसमुपोदः पादपूरणे ॥ ६ ॥**

**उपर्यध्यधसः सामीप्ये ॥ ७ ॥**

**वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ॥ ८ ॥**

१ असूयाकुत्सनयोःकोपभर्त्सनयोश्चैकार्थत्वात्पृथक्त्वनिर्देशानर्थक्यम् ।

**एकं बहुव्रीहिवत् ॥ ९ ॥**

१ एकस्य द्विर्वचनसंबन्धेनेति चेदर्थनिर्देशः ।

२ न वा वीप्साधिकारात् ।

३ बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ ।

४ सर्वनामस्वरसमासान्तेषु दोषः ।

**आबाधे च ॥ १० ॥**

**कर्मधारयवदुत्तरेषु ॥ ११ ॥**

१ कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि ।

**प्रकारे गुणवचनस्य ॥ १२ ॥**

१ प्रकारे सर्वेषां गुणवचनत्वात्सर्वप्रसङ्गः ।

२ सिद्धं तु प्रकृत्यर्थविशेषणत्वात् ।

[ ३ आनुपूर्व्ये । ]

४ स्वार्थेऽवधार्यमाणेऽनेकस्मिन् ।

[ ५ चापले । ]

६ क्रियासमभिहारे ।

[ ७ आभीक्ष्ण्ये । ]

८ डाचि च ।

९ पूर्वप्रथमयोरर्थातिशयविवक्षायाम् ।

१० डतरडतमयोः समसंप्रधारणायां स्त्रीनिगदे भावे ।

११ कर्मव्यतिहारे सर्वनाम्नः समासवच्च बहुलं यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य ।

१२ स्त्रीनपुंसकयोरुत्तरपदस्य वाम्भावः ।

**अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ १३ ॥**

**यथास्वे यथायथम् ॥ १४ ॥**

**द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ १५ ॥**

१ अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्युपसंख्यानम् ।

२ द्वन्द्वमिति पूर्वपदस्य चाम्भाव उत्तरपदस्य चात्वं नपुंसकत्वं च ।

३ उक्तं वा ।

**पदस्य ॥ १६ ॥**

**पदात् ॥ १७ ॥**

१ पदाधिकारः प्रागपदान्ताधिकारात् ।

२ पदात्प्राक्सुपि कुत्सनात् ।

३ यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात् ।

४ इह वचने ह्यपदान्तस्याप्राप्तिः ।

५ न वा पदाधिकारस्य विशेषणत्वात् ।

६ अन्तग्रहणाद्वा नलोपे ।

**अनुदात्तं सर्वमपादादौ[१] ॥ १८ ॥**

१ सर्ववचनमनादेरनुदात्तार्थमिति चेल्लुटि प्रतिषेधात्सिद्धम् ।

२ अलोऽन्त्यविधिप्रसङ्गस्तु ।

३ लुटि प्रतिषेधात्सिद्धम् ।

४ उक्तं वा ।

५ समानवाक्ये निघातयुष्मदस्मदादेशाः ।

६ पश्यार्थैश्च प्रतिषेधः ।

**आमन्त्रितस्य च ॥ १९ ॥**

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ॥ २० ॥**

**बहुवचनस्य वस्नसौ ॥ २१ ॥**

**तेमयावेकवचनस्य ॥ २२ ॥**

**त्वामौ द्वितीयायाः ॥ २३ ॥**

**न चवाहाहैवयुक्ते ॥ २४ ॥**

**पश्यार्थैश्चानालोचने ॥ २५ ॥**

**सपूर्वायाः प्रथमाया विभाषा ॥ २६ ॥**

१ युष्मदस्मदोरन्यतरस्यामनन्वादेशे[४] ।

**तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २७ ॥**

१ तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम् ।

२ अनुदात्तविशेषणे ह्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणम् ।

३ अनुदात्तग्रहणं वा ।

**तिङ्ङतिङः ॥ २८ ॥**

१ अतिङ्वचनमनर्थकं समानवाक्याधिकारात् ।

**न लुट् ॥ २९ ॥**

**निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥ ३० ॥**

१ चण्णिद्धिशिष्टश्चेदर्थे ।

**नह प्रत्यारम्भे ॥ ३१ ॥**

**सत्यं प्रश्ने ॥ ३२ ॥**

**अङ्गाप्रातिलोम्ये ॥ ३३ ॥**

**हि च ॥ ३४ ॥**

**छन्दस्यनेकमपि साकाङ्क्षम् ॥ ३५ ॥**

**यावद्यथाभ्याम् ॥ ३६ ॥**

**पूजायां नानन्तरम् ॥ ३७ ॥**

**उपसर्गव्यपेतं च ॥ ३८ ॥**

**तुपश्यपश्यताहैः पूजायाम् ॥ ३९ ॥**

**अहो च ॥ ४० ॥**

**शेषे विभाषा ॥ ४१ ॥**

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । सर्ववचनमनादेरनुदात्तार्थम् । ३ प. पुस्तके नास्ति । ४ प पुस्तके इतः परमधिकम् । सर्वे एव वाम्नावादयोऽनन्वादेशे विभाषा वक्तव्याः ।

**पुरा च परीप्सायाम् ॥ ४२ ॥**

**न न्वित्यनुज्ञैषणायाम् ॥ ४३ ॥**

**किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ॥ ४४ ॥**

**लोपे विभाषा ॥ ४५ ॥**

**एहि मन्ये प्रहासे लृट् ॥ ४६ ॥**

**जात्वपूर्वम् ॥ ४७ ॥**

**किंवृत्तं च चिदुत्तरम् ॥ ४८ ॥**

**आहो उताहो चानन्तरम् ॥ ४९ ॥**

**शेषे विभाषा ॥ ५० ॥**

**गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ॥ ५१ ॥**

१ लृटः प्रकृतिभावे कर्तुरन्यत्व उपसंख्यानं कारकान्यत्वात् ।

२ कर्तृसामान्यात्सिद्धमिति चेत्तद्भेदेऽन्यसामान्ये प्रकृतिभावप्रसङ्गः[1] ।

३ न चेत्कर्ता सर्वान्य इति चेदन्याभिधाने प्रतिषेधमेके ।

४ सिद्धं तु तिङोरेकद्रव्याभिधानात् ।

**लोट् च ॥ ५२ ॥**

**विभाषितं सोपसर्गमनुत्तमम् ॥ ५३ ॥**

**हन्त च ॥ ५४ ॥**

**आम एकान्तरमामन्त्रितमनन्तिके ॥ ५५ ॥**

१ आम एकान्तर ऐकश्रुत्यप्रतिषेधः ।

२ निघातप्रसङ्गस्तु ।

३ सिद्धं तु प्रतिषेधाधिकारे प्रतिषेधवचनात् ।

**यद्धितुपरं छन्दसि ॥ ५६ ॥**

१ यद्धितुपरस्य च्छन्दस्यनिघातोऽन्यपरप्रतिषेधार्थः ।

**चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥ ५७ ॥**

१ आम्रेडितेष्वगतेः सगतिरपि तिङित्यत्र गतिग्रहण उपसर्गग्रहणम्[2] ।

**चादिषु च ॥ ५८ ॥**

**चवायोगे प्रथमा ॥ ५९ ॥**

**हेति क्षियायाम् ॥ ६० ॥**

**अहेति विनियोगे च ॥ ६१ ॥**

**चाहलोप एवेत्यवधारणम् ॥ ६२ ॥**

**चादिलोपे विभाषा ॥ ६३ ॥**

**वै वावेति च च्छन्दसि ॥ ६४ ॥**

**एकान्याभ्यां समर्थाभ्याम् ॥ ६५ ॥**

**यद्वृत्तान्नित्यम् ॥ ६६ ॥**

१ वा याथाकाम्ये ।

**पूजनात्पूजितमनुदात्तम्[3] ॥ ६७ ॥**

१ पूजितस्यानुदात्तत्वे काष्ठादिग्रहणम् ।

२ मलोपवचनं च ।

**सगतिरपि तिङ् ॥ ६८ ॥**

१ सगतिग्रहणमपदत्वात् ।

---

१ प. पुस्तके °प्रसङ्ग इति नास्ति । २ प. पुस्तके इतः परमधिकम् । सर्वत्रैवाष्टमिके गतिग्रहण उपसर्गग्रहणम् । ३ वे. का. प्र. क. बा नि. पुस्तकेषु काष्ठादिभ्य इत्यधिकम् तत्केश्चित्प्रक्षिप्तमिति कैयटः । भाष्यविरोधात् ।

२ उत्तरार्थं च ।

३ तिङ्निघातात्पूजनात्पूजितमनुदात्तं विप्रतिषेधेन ।

**कुत्सने च सुप्यगोत्रादौ**[1] ॥ ६९ ॥

**गतिर्गतौ** ॥ ७० ॥

१ गतेरनुदात्तत्वे गतिग्रहणानर्थक्यं तिङ्यवधारणात् ।

२ छन्दोऽर्थमिति चेन्नागतित्वात् ।

**तिङि चोदात्तवति** ॥ ७१ ॥

१ तिङ्ग्रहणमुदात्तवतः परिमाणार्थम्[2] ।

२ यद्योगाद्वतिरिति चेत्प्रत्ययोदात्तत्वेऽप्रसिद्धिः ।

**आमन्त्रितं पूर्वमविद्यमानवत्** ॥ ७२ ॥

१ पूर्वं प्रति विद्यमानवत्वादुत्तरत्रानन्तर्याप्रसिद्धिः ।

२ सिद्धं तु पदपूर्वस्येति वचनात् ।

३ अविद्यमानवत्त्वे प्रयोजनमामन्त्रितयुष्मदस्मत्तिङ्घाताः ।

४ पूजायामनन्तरप्रतिषेधः ।

५ जात्वपूर्वम् ।

६ आहो उताहो चानन्तरविधौ ।

७ आम एकान्तरविधौ

**नामन्त्रिते समानाधिकरणे**[3] ॥ ७३ ॥

**[4]सामान्यवचनं विभाषितं विशेषवचने** ॥ ७४ ॥

॥ इत्यष्टमाध्यायस्य प्रथमः पादः ॥

---

**पूर्वत्रासिद्धम्** ॥ १ ॥

१ पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य ।

२ अपवादो वचनप्रामाण्यात् ।

३ पूर्वत्रासिद्धमधिकारः ।

४ परस्य परस्य पूर्वत्र पूर्वत्रासिद्धविज्ञानार्थम् ।

५ अनधिकारे हि समुदायस्य समुदायेऽसिद्धविज्ञानम् ।

६ तत्रायथेष्टप्रसङ्गः ।

७ तस्मादधिकारः ।

८ असिद्धवचन उक्तम् ।

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति** ।२।

१ संज्ञाग्रहणानर्थक्यं च तन्निमित्तत्वाल्लोपस्य ।

२ स्वरेऽवधारणाच्च ।

३ तुग्विधौ चोक्तम् ।

**न मु ने** ॥ ३ ॥

१ न मु टादेशे ।

---

१ प. पुस्तक इतः परमधिकम् । सुपि कुत्सने क्रियायाः । मकारलोपोऽतिङि । पूतिश्चानुबन्धः । विभाषितं चापि बह्वर्थम् । २ प. पुस्तके इतः परमधिकम् । यद्योगाद्वतिः । ३ वै. का. प्र. नि. बा. सामान्यवचनामित्याधिकम् । ४ वै. का प्र. नि. बा. पुस्तकषु सामान्यवचनमिति नास्ति । एष्वेव पुस्तकेषु अन्ते बहुवचनमित्यधिकम् । ५–६ प. पुस्तके नास्ति ।

**उदात्तस्वरितयोर्यणः स्वरितो ऽनुदात्तस्य ॥ ४ ॥**

१ यण्स्वरो यणादेशे स्वरितयणः स्वरितार्थम् ।

२ आश्रयात्सिद्धत्वमिति चेदुदात्तात्स्वरिते दोषः ।

**एकादेश उदात्तेनोदात्तः ॥ ५ ॥**

**स्वरितो वानुदात्ते पदादौ ॥ ६ ॥**

१ एकादेशस्वरोऽन्तरङ्गः ।

२ अयवायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम् ।

३ संयोगान्तलोपो रोरुत्वे हरिवो मेदिनं त्वा ।

४ प्लुतिश्च ।

५ सिज्लोप एकादेशे ।

६ संयोगादिलोपः संयोगान्तलोपे ।

७ निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु ।

८ वस्वादिषु दत्वं सौ दीर्घत्वे ।

९ अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे ।

१० प्रगृह्यसंज्ञायां च ।

११ प्लुतिस्तुग्विधौ छे ।

१२ श्चुत्वं धुट्त्वे ।

१३ अभ्यासजश्त्वचर्त्वमेत्वतुकोः ।

१४ द्विर्वचने परसवर्णत्वम् ।

१५ पदाधिकारश्चेल्लत्वघत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि ।

**नलोपः प्रातिपदिकान्तस्य ॥ ७ ॥**

१ नलोपेऽन्तग्रहणं पदाधिकारस्य विशेषणत्वात् ।

२ अह्नो नलोपप्रतिषेधः ।

३ अहन्ग्रहणादिति चेत्संबुद्ध्यर्थं वचनम् ।

**न ङिसंबुद्ध्योः ॥ ८ ॥**

१ न ङिसंबुध्योरनुत्तरपदे ।

२ वा नपुंसकानाम् ।

३ भत्वात्तु ङौ प्रतिषेधानर्थक्यम् ।

**मादुपधायाश्च मतोर्वो ऽयवादिभ्यः ॥९॥**

१ अनन्त्ययोरपि निष्ठामतुपोरादेशः ।

२ नार्मते प्रतिषेधः ।

३ उक्तं वा ।

**झयः ॥ १० ॥**

**संज्ञायाम् ॥ ११ ॥**

**आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ॥ १२ ॥**

**उदन्वानुदधौ ॥ १३ ॥**

**राजन्वान्सौराज्ये ॥ १४ ॥**

**छन्दसीरः ॥ १५ ॥**

**अनो नुट् ॥ १६ ॥**

१ अनो नुकि विनामरुविधिप्रतिषेधः ।

२ परादौ वत्वप्रतिषेधोऽवग्रहश्च ।

३ भत्वात्सिद्धम् ।

४ अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि ।

५ घग्रहणं च ।

**नाद्घस्य ॥ १७ ॥**

१ ईद्रथिनः ।

---

१ प. पुस्तके नास्ति । २ 'न संप्रसारण' इति सूत्रभाष्ये 'कक्षायाः संज्ञायां मतौ संप्रसारणं वक्तव्यम्' इत्यारब्धम् । अतोऽत्र सूत्रे कक्षीवच्छब्दपाठः अनार्ष इत्याहुः

२ भूरिदावस्तुट् ।

**कृपो रो लः ॥ १८ ॥**

**उपसर्गस्यायतौ ॥ १९ ॥**

१ रेफस्यायताविति चेत्परेरुपसंख्यानम् ।

२ उपसर्गस्येति चेदेकादेशेऽप्रसिद्धिः ।

**ग्रो यङि ॥ २० ॥**

**अचि विभाषा ॥ २१ ॥**

१ गिरतेर्लत्वे[2] णावुक्तम् ।

**परेश्च घाङ्कयोः[3] ॥ २२ ॥**

१ सङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि ।

२ प्रयोजनं गिरौ गिरः पयो धावति द्विष्टरां दृषत्स्थानं काष्ठशक्स्थाता कुञ्चा धुर्य इति ।

**संयोगान्तस्य लोपः ॥ २३ ॥**

१ संयोगान्तस्य लोपे यणः प्रतिषेधः ।

२ न वा झलो लोपात् ।

३ बहिरङ्गलक्षणत्वाद्वा ।

४ संयोगान्तलोपे सग्रहणम् ।

५ रुविधानस्यानवकाशत्वात् ।

६ योगविभागात्सिद्धम् ।

**रात्सस्य ॥ २४ ॥**

**धि च[4] ॥ २५ ॥**

**झलो झलि ॥ २६ ॥**

**ह्रस्वादङ्गात् ॥ २७ ॥**

**इट ईटि ॥ २८ ॥**

**स्कोः संयोगाद्योरन्ते च ॥ २९ ॥**

**चोः कुः ॥ ३० ॥**

**हो ढः ॥ ३१ ॥**

**दादेर्धातोर्घः ॥ ३२ ॥**

१ हृग्रहोर्भश्छन्दसि हस्य ।

**वा द्रुहमुहष्णुहष्णिहाम्[5] ॥ ३३ ॥**

**नहो धः ॥ ३४ ॥**

**आहस्थः ॥ ३५ ॥**

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥ ३६ ॥**

**एकाचो बशो भष् झषन्तस्य स्ध्वोः ॥ ३७ ॥**

**दधस्तथोश्च ॥ ३८ ॥**

१ दधस्तथोरनुकर्षणानर्थक्यं स्थानिवत्प्रतिषेधात् ।

२ इतरथा ह्यलोपे प्रतिषेधः ।

**झलां जशो ऽन्ते ॥ ३९ ॥**

**झषस्तथोर्धोऽधः ॥ ४० ॥**

**षढोः कः सि ॥ ४१ ॥**

**रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ४२ ॥**

१ निष्ठादेशे पूर्वग्रहणं परस्यादेशप्रतिषेधार्थम् ।

२ पञ्चमीनिर्दिष्टाद्धि परस्य ।

३ वृद्धिनिमित्तात्प्रतिषेधः ।

---

१ प. पुस्तके इतः परमधिकम् । कृपणादीनां प्रतिषेधो वक्तव्यः । वालमूललघ्वलमङ्गुलीनां वा लो रमापद्यत इति वक्तव्यम् । संज्ञाछन्दसोर्वा कपिलादीनामिति वक्तव्यम् । २ प पुस्तके णावुपसंख्यानमिति । ३ प. पुस्तके इतः परमधिकम् । योगे च । ४ प. पुस्तके इतः परमधिकम् । धि सकारे सिचो लोपः । चकाद्धीति प्रयोजनम् । आशाध्वं तु कथं ते स्यात् । जश्त्वं सस्य भविष्यति । सर्वत्रैवं प्रसिद्धं स्यात् । श्रुतिश्चापि न भिद्यते । लुङश्चापि न मूर्धन्ये ग्रहणम् । सेटि दुष्यति । घसिभस्योर्न सिध्येत्तु । तस्मात्सिज्ग्रहणं न तत् । छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे । ५ सुहास्निहाम् इति बो. पुस्तके ।

४ प्रयोजनं कार्तिक्षैतिफौल्लयः ।

५ न वा बहिरङ्गलक्षणत्वात् ।

**संयोगादेरातो धातोर्यण्वतः ॥ ४३ ॥**

**ल्वादिभ्यः ॥ ४४ ॥**

१ ऋकारल्वादिभ्यः क्तिन्निष्ठावत् ।

२ दुग्वोर्दीर्घश्च ।

३ पूञो विनाशे ।

४ सिनोतेर्ग्रासकर्मकर्तृकस्य ।

**ओदितश्च ॥ ४५ ॥**

**क्षियो दीर्घात् ॥ ४६ ॥**

**श्यो ऽस्पर्शे ॥ ४७ ॥**

**अञ्चो ऽनपादाने ॥ ४८ ॥**

१ अञ्चेर्नत्वे व्यक्तप्रतिषेधः ।

२ अञ्जिविज्ञानात्सिद्धम् ।

३ अञ्चत्यर्थ इति चेदञ्जेस्तदर्थत्वात्सिद्धम् ।

**दिवो ऽविजिगीषायाम् ॥ ४९ ॥**

**निर्वाणो ऽवाते ॥ ५० ॥**

१ अवाताभिधाने ।

**शुषः कः ॥ ५१ ॥**

**पचो वः ॥ ५२ ॥**

**क्षायो मः ॥ ५३ ॥**

**प्रस्त्यो ऽन्यतरस्याम् ॥ ५४ ॥**

**अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ॥५५॥**

१ फलेर्लत्व उत्पूर्वस्योपसंख्यानम्[२] ।

**नुदविदोन्दत्राघ्राह्रीभ्यो ऽन्यतरस्याम् ॥ ५६ ॥**

**न ध्याख्यापॄमूर्छिमदाम् ॥ ५७ ॥**

**वित्तो भोगप्रत्यययोः[३] ॥ ५८ ॥**

**भित्तं शकलम् ॥ ५९ ॥**

**ऋणमाधमर्ण्ये ॥ ६० ॥**

**नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि ॥ ६१ ॥**

**क्विन्प्रत्ययस्य कुः ॥ ६२ ॥**

**नशेर्वा ॥ ६३ ॥**

**मो नो धातोः ॥ ६४ ॥**

**म्वोश्च ॥ ६५ ॥**

**ससजुषो रुः ॥ ६६ ॥**

**अवयाः श्वेतवाः पुरोडाश्च ॥ ६७ ॥**

**अहन् ॥ ६८ ॥**

१ रुविधावह्नो रूपरात्रिरथंतरेषूपसंख्यानम् ।

**रो ऽसुपि ॥ ६९ ॥**

१ असुपि रादेश उपसर्जनसमासे प्रतिषेधोऽलुकि ।

२ सिद्धं तु सुपि प्रतिषेधात् ।

३ [४]लुकि चोक्तम् ।

**अम्नरूधरवरित्युभयथा छन्दसि ॥ ७० ॥**

१ छन्दसि भाषायां च प्रचेतसो राजन्युपसंख्यानम् ।

**भुवश्च महाव्याहृतेः ॥ ७१ ॥**

**वसुस्रंसुध्वंस्वनडुहां दः ॥ ७२ ॥**

१ अनडुहो दत्वे नकारप्रतिषेधः ।

---

१ प. पुस्तके इतः परमाधिकम् । कृशेः क एषः विहित इगुपधात् । स्वरे हि दोषो भवति परिकृशे पदस्य लोपो विहित इति मतम् । जगत्यनूना भवति हि रुचिरा । २ प. पुस्तके इतः परमधिकम् । उत्फुल्लसंफुल्लयोरिति वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । यस्य विदेः श्नशकौ तपरत्वे तनवचने तदु भाप्रतिषेधौ । श्यन्विकरणान्न विधिश्छिदितुल्यः । लुग्विकरणो वालि पर्यंदन्नः । ४ प. पुस्तके नास्ति ।

२ सिद्धं तु प्रतिपदविधानान्नुमः ।

**तिप्यनस्तेः ॥ ७३ ॥**

**सिपि धातो रुर्वा ॥ ७४ ॥**

**दश्च ॥ ७५ ॥**

**र्वोरुपधाया दीर्घ इकः ॥ ७६ ॥**

**हलि च ॥ ७७ ॥**

**उपधायां च ॥ ७८ ॥**

१ उपधादीर्घत्वेऽभ्यासजिश्रिचतुर्णां प्रतिषेधः ।

२ उणादिप्रतिषेधश्च ।

**न भकुर्छुराम् ॥ ७९ ॥**

**अदसो ऽसेर्दादु दो मः ॥ ८० ॥**

१ अदसोऽनोस्रेः ।

२ तत्र पदाधिकारादपदान्तस्याप्राप्तिः ।

३ सिद्धं तु सकारप्रतिषेधात् ।

४ दाद्ग्रहणमन्त्यप्रतिषेधार्थम् ।

**एत ईद्बहुवचने ॥ ८१ ॥**

१ ईत्वं बहुवचनान्तस्य ।

**वाक्यस्य टेः प्लुत उदात्तः ॥ ८२ ॥**

१ वाक्याधिकारः पदनिवृत्त्यर्थः ।

२ टिग्रहणमलोऽन्त्यनियमे व्यञ्जनान्तार्थम् ।

३ सर्वादेशप्रसङ्गस्तु ।

४ उक्तं वा ।

**प्रत्यभिवादे ऽशूद्रे ॥ ८३ ॥**

१ अशूद्रस्त्र्यसूयकेषु ।

२ भोराजन्यविशां वा[2] ।

**दूराद्धूते च ॥ ८४ ॥**

**हैहेप्रयोगे हैहयोः ॥ ८५ ॥**

१ हैहेप्रयोगे हैहेग्रहणं हैहयोः प्लुत्यर्थम् ।

२ प्रयोगग्रहणमर्थवद्ग्रहणेऽनर्थकार्थम् ।

३ पुनर्हैहेग्रहणमन्त्यार्थम् ।

**गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ॥ ८६ ॥**

१ गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतप्रसङ्गोऽन्येन विहितत्वात् ।

२ न वानन्त्यस्यापीति वचनमुभयनिर्देशार्थम् ।

३ प्राग्वचनं विभाषार्थम् ।

४ प्राग्वचनानर्थक्यं चैकैकस्येति वचनात् ।

**ओमभ्यादाने ॥ ८७ ॥**

**ये यज्ञकर्मणि ॥ ८८ ॥**

१ ये यज्ञकर्मणीत्यतिप्रसङ्गः ।

२ सिद्धं तु ये यजामह इति ब्रूह्यादिषूपसंख्यानात् ।

**प्रणवष्टेः ॥ ८९ ॥**

१ टिग्रहणं सर्वादेशार्थम् ।

**याज्यान्तः ॥ ९० ॥**

**ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ॥ ९१ ॥**

**अग्नीत्प्रेषणे परस्य च ॥ ९२ ॥**

१ अग्नीत्प्रेषण इत्यतिप्रसङ्गः ।

२ सिद्धं त्वोश्रावये परस्य चेति वचनात्[3] ।

**विभाषा पृष्टप्रतिवचने हेः ॥ ९३ ॥**

---

१ प.पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । सर्वस्यव नाम्नः प्रत्यभिवादे भोः शब्द आदेशो वक्तव्यः । ३ प. पुस्तके इतः परमधिकम् । ओंश्रावयाश्रावयोरिति वक्तव्यम् । बहुलमन्यत्रेति वक्तव्यम् ।

निगृह्यानुयोगे च ॥ ९४ ॥

आम्रेडितं भर्त्सने ॥ ९५ ॥

१ भर्त्सने पर्यायेण ।

अङ्गयुक्तं तिङाकाङ्क्षम् ॥ ९६ ॥

विचार्यमाणानाम् ॥ ९७ ॥

पूर्वं तु भाषायाम् ॥ ९८ ॥

प्रतिश्रवणे च ॥ ९९ ॥

अनुदात्तं प्रश्नान्ताभिपूजितयोः ॥ १०० ॥

चिदिति चोपमार्थे प्रयुज्यमाने ॥ १०१ ॥

उपरि स्विदासीदिति च ॥ १०२ ॥

स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ॥ १०३ ॥

१ असूयादिषु वावचनम् ।

क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ॥ १०४ ॥

अनन्त्यस्यापि प्रश्नाख्यानयोः ॥ १०५ ॥

प्लुतावैच इदुतौ ॥ १०६ ॥

१ ऐचोरुभयविवृद्धिप्रसङ्गादिदुतोः प्लुतवचनम् ।

२ तत्रायथेष्टप्रसङ्गः ।

३ सिद्धं त्विदुतोर्दीर्घवचनात् ।

एचो ऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ॥ १०७ ॥

१ एचः[1] प्लुतविकारे पदान्तग्रहणम् ।

२ विषयपरिगणनं च[2] ।

३ आमन्त्रिते छन्दस्युपसंख्यानम् ।

तयोर्य्वावचि संहितायाम् ॥ १०८ ॥

॥ इत्यष्टमाध्यायस्य द्वितीयः पादः ॥

---

मतुवसो रु संबुद्धौ छन्दसि ॥ १ ॥

१ मतुवसो रादेशे वन उपसंख्यानम् ।

२ विभाषा भवद्भगवदघवतामोच्चावस्य ।

अत्रानुनासिकः पूर्वस्य तु वा ॥ २ ॥

आतो ऽटि नित्यम् ॥ ३ ॥

अनुनासिकात्परो ऽनुस्वारः ॥ ४ ॥

समः सुटि ॥ ५ ॥

पुमः खय्यम्परे ॥ ६ ॥

नश्छव्यप्रशान् ॥ ७ ॥

उभयथर्क्षु ॥ ८ ॥

दीर्घादटि समानपादे ॥ ९ ॥

नॄन्पे ॥ १० ॥

स्वतवान्पायौ ॥ ११ ॥

कानाम्रेडिते ॥ १२ ॥

१ संपुंकानां सत्वम् ।

२ रुविधौ ह्यनिष्टप्रसङ्गः ।

ढो ढे लोपः ॥ १३ ॥

१ ढलोपेऽपदान्तग्रहणम् ।

२ जश्भावादिति चेदुत्तरत्र ढस्याभावादपवादप्रसङ्गः ।

३ तस्मात्सिद्धवचनम् ।

४ संग्रहणं वा ।

रो रि ॥ १४ ॥

खरवसानयोर्विसर्जनीयः ॥ १५ ॥

---

[1] प. पुस्तके एच इति नास्ति । [2] प. पुस्तके इतः परमधिकम् । प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम् ।

१ विसर्जनीयोऽनुत्तरपदे ।

२ न वा बहिरङ्गलक्षणत्वात् ।

**रोः सुपि ॥ १६ ॥**

**भोभगोअघोअपूर्वस्य योऽशि ॥ १७॥**

१ अश्ग्रहणमनर्थकमन्यत्राभावात् ।

**व्योर्लघुप्रयत्नतरः शाकटायनस्य ।१८।**

**लोपः शाकल्यस्य ॥ १९ ॥**

**ओतो गार्ग्यस्य ॥ २० ॥**

१ ओकाराल्लोपवचनं नित्यार्थम् ।

**उञि च पदे ॥ २१ ॥**

**हलि सर्वेषाम् ॥ २२ ॥**

**मोऽनुस्वारः ॥ २३ ॥**

**नश्चापदान्तस्य झलि ॥ २४ ॥**

**मो राजि समः क्वौ ॥ २५ ॥**

**हे मपरे वा ॥ २६ ॥**

१ यवलपरे यवला वा ।

**नपरे नः २७ ॥**

**ङ्णोः कुक्टुक् शरि ॥ २८ ॥**

**डः सि धुट् ॥ २९ ॥**

**नश्च ॥ ३० ॥**

**शि तुक् ॥ ३१ ॥**

**ङमो ह्रस्वादचि ङमुण्नित्यम् ॥ ३२ ॥**

१ धुगादिषु ष्टुत्वणत्वप्रतिषेधः ।

२ परादौ छत्वषत्वविधिप्रतिषेधः ।

३ ङमुटि पदादिग्रहणम् ।

**मय उञो वो वा ॥ ३३ ॥**

**विसर्जनीयस्य सः ॥ ३४ ॥**

**शर्परे विसर्जनीयः ॥ ३५ ॥**

**वा शरि ॥ ३६ ॥**

१ वाशर्प्रकरणे खर्परे लोपः ।

**कुप्वोः ᳲक ᳲपौ च ॥ ३७ ॥**

१ सस्या कुप्वोर्विसर्जनीयजिह्वामूलीयोपध्मानीयाः ।

१ विसर्जनीयादेशे हि शर्परयोरेवादेशप्रसङ्गः ।

**सो ऽपदादौ ॥ ३८ ॥**

१ सोऽपदादावनव्ययस्य ।

२ रोः काम्ये नियमार्थम् ।

**इणः षः ॥ ३९ ॥**

**नमस्पुरसोर्गत्योः ॥ ४० ॥**

**इदुदुपधस्य चाप्रत्ययस्य ॥ ४१ ॥**

१ इदुदुपधस्य चाप्रत्ययस्येति चेत्पुम्मुहुसोः प्रतिषेधः[१] ।

२ प्लुतानां तादौ च ।

३ न वा बहिरङ्गलक्षणत्वात् ।

४ भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्य ।

**तिरसो ऽन्यतरस्याम् ॥ ४२ ॥**

**द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ॥ ४३ ॥**

**इसुसोः सामर्थ्ये ॥ ४४ ॥**

**नित्यं समासे ऽनुत्तरपदस्थस्य[३] ॥४५॥**

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । वृद्धिभूतानां षत्वं वक्तव्यम् । ३ प. पुस्तके इतः परमधिकम् । नानापदार्थयोर्वर्तमानयोः स्मायते यदा योगः । तस्मिन्षत्वं कार्यं तद्युक्तं तत्र मे नेह । ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत । तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यते । अथ चेत्कृदन्तमेतत्ततोऽधिके नैव मे भवेत्प्राप्तिः । वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्प्येत । अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम् । सिद्धं च मे समासे प्रतिषेधार्थस्तु यत्नोऽयम् ।

अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥ ४६ ॥

अधःशिरसी पदे ॥ ४७ ॥

कस्कादिषु च ॥ ४८ ॥

छन्दसि वाप्राम्रेडितयोः ॥ ४९ ॥

कःकरत्करतिकृधिकृतेष्वनदितेः ॥५०॥

पञ्चम्याः परावध्यर्थे ॥ ५१ ॥

पातौ च बहुलम् ॥ ५२ ॥

षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ॥ ५३ ॥

इडाया वा ॥ ५४ ॥

अपदान्तस्य मूर्धन्यः ॥ ५५ ॥

सहेः साडः सः ॥ ५६ ॥

१ साडः षत्वे समानशब्दप्रतिषेधः ।

२ अर्थवद्ग्रहणात्सिद्धमिति चेत्तद्धितलोपेऽर्थवत्त्वात्प्रतिषेधः ।

इण्कोः ॥ ५७ ॥

नुम्विसर्जनीयशर्व्यवायेऽपि ॥ ५८ ॥

१ नुम्विसर्जनीयशर्व्यवाये निंसेः प्रतिषेधः।

२ योगविभागात्सिद्धम् ।

आदेशप्रत्यययोः ॥ ५९ ॥

१ आदेशप्रत्यययोः षत्वे सरकः प्रतिषेधः।

२ बहुलवचनात्सिद्धम् ।

३ आदेशप्रत्यययोरित्यवयवषष्ठी चेद्द्विर्वचने प्रतिषेधः ।

४ समानाधिकरणानां चाप्राप्तिः ।

५ नानाविभक्तीनां च[१] समासानुपपत्तिः ।

६ योगविभागात्सिद्धम् ।

७ [२]उक्तं वा ।

शासिवसिघसीनां च ॥ ६० ॥

स्तौतिण्योरेव षण्यभ्यासात् ॥ ६१ ॥

सः स्विदिस्वदिसहीनां च ॥ ६२ ॥

प्राक्सितादड्व्यवायेऽपि ॥ ६३ ॥

स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ६४ ॥

१ स्थादिष्वभ्यासवचनं नियमार्थम् ।

२ तद्व्यवाये चाषोपदेशार्थम् ।

३ अवर्णार्थं षणि प्रतिषेधार्थं च ।

उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ॥ ६५ ॥

१ उपसर्गात्षत्वे निस उपसंख्यानमनिणन्तत्वात् ।

२ न वा वर्णाश्रयत्वात्षत्वस्य तद्विशेषक उपसर्गो धातुश्च ।

३ सुनोत्यादीनां षत्वे ण्यन्तस्योपसंख्यानमधिकत्वात् ।

४ न वावयवस्यानन्यत्वात् ।

५ नामधातोस्तु प्रतिषेधः ।

६ न वानुपसर्गत्वात् ।

सदिरप्रतेः ॥ ६६ ॥

---

१ प. पुस्तके इतः परमधिकम् । अर्थवद्ग्रहणात्सिद्धम् । २ प. पुस्तके सरगादीनामिति । ३-४ प. पुस्तके नास्ति । ५ प. पुस्तके अनिणन्तत्वादिति नास्ति ।

[1]स्तम्भेः ॥ ६७ ॥
अवाच्चालम्बनाविदूर्ययोः ॥ ६८ ॥
वेश्च स्वनो भोजने ॥ ६९ ॥
परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ॥ ७० ॥
सिवादीनां वाड्व्यवायेऽपि ॥ ७१ ॥
अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ७२ ॥
वेः स्कन्देरनिष्ठायाम् ॥ ७३ ॥
परेश्च ॥ ७४ ॥
परिस्कन्दः प्राच्यभरतेषु ॥ ७५ ॥
स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥ ७६ ॥
वेः स्कभ्नातेर्नित्यम् ॥ ७७ ॥
इणःषीध्वंलुङ्लिटां धोऽङ्गात् ॥ ७८ ॥
विभाषेटः ॥ ७९ ॥

१ इण्ग्रहणं ढत्वे कवर्गनिवृत्त्यर्थम् ।
२ तत्र प्रत्ययपरत्व इटो लिटि ढत्वं परादित्वात् ।
३ धकारपरत्वे षीध्वम्यनन्तरत्वादिटो विभाषाभावः ।
४ इण्ग्रहणस्य चाविशेषणत्वात्ल्यादिमात्रे ढत्वप्रसङ्गः ।

समासेऽङ्गुलेः सङ्गः ॥ ८० ॥
भीरोः स्थानम् ॥ ८१ ॥
अग्नेः स्तुत्स्तोमसोमाः ॥ ८२ ॥

१ अग्नेर्दीर्घात्सोमस्य ।
२ इतरथा ह्यनिष्टप्रसङ्गः ।

ज्योतिरायुषः स्तोमः ॥ ८३ ॥
मातृपितृभ्यां स्वसा ॥ ८४ ॥
मातुःपितुर्भ्यामन्यतरस्याम्[2] ॥ ८५ ॥

१ मातुःपितुरिति सान्तग्रहणानर्थक्यमेकदेशविकृतस्यानन्यत्वात् ।

अभिनिसः स्तनः शब्दसंज्ञायाम् ॥८६॥
उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८७ ॥
सुविनिर्दुर्भ्यः सुपिसूतिसमाः[3] ॥ ८८ ॥
निनदीभ्यां स्नातेः कौशले ॥ ८९ ॥
सूत्रं प्रतिष्णातम् ॥ ९० ॥
कपिष्ठलो गोत्रे ॥ ९१ ॥

१ कपिष्ठलो गोत्रप्रकृतौ ।

प्रष्ठोऽग्रगामिनि ॥ ९२ ॥
वृक्षासनयोर्विष्टरः ॥ ९३ ॥
छन्दोनाम्नि च ॥ ९४ ॥
गवियुधिभ्यां स्थिरः ॥ ९५ ॥
विकुशमिपरिभ्यः स्थलम् ॥ ९६ ॥
अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कुङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः[4] ॥ ९७ ॥
सुषामादिषु च[5] ॥ ९८ ॥
ह्रस्वात्तादौ तद्धिते ॥ ९९ ॥

---

१ वे. का. बा प्र. पुस्तकेषु स्तम्भेरिति । २ प. पुस्तके इतः परमधिकम् । सान्ताभ्यां चेति वक्तव्यम् ।
३ प. पुस्तके इतः परमधिकम् । सुपेः षत्वं स्वपेर्मा भूत् । विसुष्वापेति केन न । हलादिशेषान्न सुपिः । इष्टं पूर्वं प्रसारणम् । स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः । अनर्थके विषुषुपुः । सुपिभूतो द्विरुच्यते ।
४ प. पुस्तके इतः परमधिकम् । स्थस्थास्थिन्स्थूणामिति वक्तव्यम् । ५ इतः परम् एति संज्ञायामगात् नक्षत्राद्वा इति सूत्रद्वयं बहुषु पुस्तकेषु समुपलभ्यते । तथापि अनयोर्गणसूत्रत्वमेव न्याय्यम् । एतदुदाहरणानां गणे समुपलम्भात् ।

निसस्तपतावनासेवने ॥ १०० ॥

युष्मत्तत्ततक्षुःष्वन्तःपादम् ॥ १०१ ॥

१ ह्रस्वात्तादौ तिङि प्रतिषेधः ।

यजुष्येकेषाम् ॥ १०२ ॥

स्तुतस्तोमयोश्छन्दसि ॥ १०३ ॥

१ स्तुतस्तोमयोश्छन्दस्यनर्थकं वचनं पूर्वपदादिति सिद्धत्वात् ।

पूर्वपदात् ॥ १०४ ॥

सुञः ॥ १०५ ॥

सनोतेरनः ॥ १०६ ॥

१ सनोतेरन इति च ।

२ सनोतेरन इति नियमार्थमिति चेत्सवनादिकृतत्वात्सिद्धम् ।

३ सनर्थं तु ।

सहेः पृतनर्ताभ्यां च ॥ १०७ ॥

न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ १०८ ॥

सात्पदाद्योः ॥ १०९ ॥

सिचो यङि ॥ ११० ॥

सेधतेर्गतौ ॥ १११ ॥

प्रतिस्तब्धनिस्तब्धौ च ॥ ११२ ॥

सोढः ॥ ११३ ॥

स्तम्भुसिवुसहां चङि ॥ ११४ ॥

१ स्तम्भुसिवुसहां चङ्युपसर्गात् ।

सुनोतेः स्यसनोः ॥ ११५ ॥

सदेः परस्य लिटि ॥ ११६ ॥

१ सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानम् ।

निव्यभिभ्यो ऽड्व्यवाये वा छन्दसि ॥ ११७ ॥

॥ इत्यष्टमाध्यायस्य तृतीयः पादः ॥

———

रषाभ्यां नो णः समानपदे ॥ १ ॥

१ रषाभ्यां णत्व ऋकारग्रहणम् ।

२ एकदेशे नुडादिषु चोक्तम् ।

अट्कुप्वाङ्नुम्व्यवाये ऽपि ॥ २ ॥

१ अड्व्यवाये णत्वेऽन्यव्यवाये प्रतिषेधः ।

२ न वान्येन व्यपेतत्वात् ।

३ तत्समुदाये णत्वाप्रसिद्धिर्यथान्यत्र ।

४ कुव्यवाये हादेशेषु प्रतिषेधः ।

५ प्रयोजनं वृत्रघ्नः स्रुघ्नः प्राघानीति ।

६ नुम्व्यवाये णत्वेऽनुस्वाराभावे प्रतिषेधः ।

७ अनागमे च णत्वम् ।

८ अनुस्वारव्यवायवचनात्तु सिद्धम् ।

पूर्वपदात्संज्ञायामगः ॥ ३ ॥

१ पूर्वपदात्संज्ञायामुत्तरपदग्रहणम् ।

२ तद्धितपूर्वपदस्थाप्रतिषेधार्थम् ।

३ संज्ञायां नियमवचने गप्रतिषेधान्नियमप्रतिषेधः ।

४ तत्र नित्यं णत्वप्रसङ्गः ।

५ योगविभागात्सिद्धम् ।

६ अप्रतिषेधो वा यथा सर्वनामसंज्ञायाम् ।

वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ॥ ४ ॥

१ बे. का. पुस्तकयोः सदेः स्थाने सदिष्वञ्जोरिति पाठः । २ प. पुस्तके नास्ति ।

**प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्यो ऽसंज्ञायामपि ॥ ५ ॥**

**विभाषौषधिवनस्पतिभ्याम्[1] ॥ ६ ॥**

**अह्नो ऽदन्तात्[2] ॥ ७ ॥**

**वाहनमाहितात्[3] ॥ ८ ॥**

**पानं देशे ॥ ९ ॥**

**वा भावकरणयोः ॥ १० ॥**

१ वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम्।

**प्रातिपदिकान्तनुम्विभक्तिषु च ॥११॥**

१ प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थम् ।

२ [4]लिङ्गविशिष्टग्रहणे चोक्तम् ।

३ तत्र युवादिप्रतिषेधः ।

**एकाजुत्तरपदे णः ॥ १२ ॥**

**कुमति च ॥ १३ ॥**

**उपसर्गादसमासे ऽपि णोपदेशस्य ॥१४॥**

१ णोपदेशं प्रत्युपसर्गाभावादनिर्देशः ।

२ वचनप्रामाण्यादिति चेत्पदलोपे प्रतिषेधः ।

३ सिद्धं तु यं प्रत्युपसर्गस्तत्स्थस्येति वचनात् ।

**हिनु मीना ॥ १५ ॥**

१ हिनुमिनाग्रहणे विकृतस्योपसंख्यानम् ।

२ सिद्धमचः स्थानिवत्त्वात् ।

**आनि लोट् ॥ १६ ॥**

१ आनि लोड्ग्रहणानर्थक्यमर्थवद्ग्रहणात् ।

२ अनुपसर्गाद्वा ।

**नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥ १७ ॥**

१ नेर्गदादिष्वड्व्यवाय उपसंख्यानम् ।

**शेषे विभाषाकखादावषान्त उपदेशे ॥ १८ ॥**

**अनितेः ॥ १९ ॥**

**अन्तः ॥ २० ॥**

१ अनितेरन्तग्रहणं संबुद्ध्यर्थम्[5] ।

**उभौ साभ्यासस्य ॥ २१ ॥**

**हन्तेरत्पूर्वस्य ॥ २२ ॥**

१ हन्तेरत्पूर्वस्य वचन उक्तम् ।

**वमोर्वा ॥ २३ ॥**

**अन्तरदेशे ॥ २४ ॥**

**अयनं च ॥ २५ ॥**

**छन्दस्यृदवग्रहात् ॥ २६ ॥**

**नश्च धातुस्थोरुषुभ्यः ॥ २७ ॥**

**[7]उपसर्गादनोत्परः ॥ २८ ॥**

**कृत्यचः ॥ २९ ॥**

१ कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानम् ।

**णेर्विभाषा ॥ ३० ॥**

१ णेर्विभाषायां साधनव्यवाय उपसंख्यानम् ।

---

१ प. पुस्तके इतः परमधिकम् । द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम् । रिकादिभ्यः प्रतिषेधो वक्तव्यः । २ अदन्तादद्न्तस्येति वक्तव्यम् । ३ आहितोपस्थितयोरिति वक्तव्यम् । वाहनं वाह्यादिति वक्तव्यम् । ४ प. पुस्तके नास्ति । ५ प. पुस्तके इतः परमाधिकम् । यो वा तस्मादनन्तरः । ६ प. पुस्तके इतः परमधिकम् । साभ्यासस्य द्वयोरिष्टम् । ७ वै. का. नि. प्र. पुस्तकेषु एतत्सूत्रम् उपसर्गाद्बहुलमिति । ८ प. पुस्तके इतः परमाधिकम् । भाविन्यज्योति नेष्यते ।

२ तद्विधानात्सिद्धम् ।

३ अड्धिकाराद्वा ।

हलश्चेजुपधात् ॥ ३१ ॥

इजादेः सनुमः ॥ ३२ ॥

१ सनुमो णत्वेऽवधारणाप्रसिद्धिर्विधेय-भावात् ।

२ सिद्धं तु प्रतिषेधाधिकारे सनुम्ग्रहणात् ।

३ कृत्स्थस्य च णत्वे इजादेः सनुमो ग्रहणम् ।

वा निंसनिक्षनिन्दाम् ॥ ३३ ॥

न भाभूपूकमिगमिप्यायिवेपाम् ॥ ३४ ॥

१ भादिषु पुग्ग्रहणम् ।

२ ण्यन्तस्य चोपसंख्यानम् ।

षात्पदान्तात् ॥ ३५ ॥

१ षात्पदादिपरवचनम् ।

नशेः षान्तस्य ॥ ३६ ॥

१ नशेरशः ।

पदान्तस्य ॥ ३७ ॥

पदव्यवाये ऽपि ॥ ३८ ॥

१ पदव्यवायेऽतद्धिते ।

क्षुभ्नादिषु च ॥ ३९ ॥

स्तोः श्चुना श्चुः ॥ ४० ॥

ष्टुना ष्टुः ॥ ४१ ॥

न पदान्ताट्टोरनाम्[1] ॥ ४२ ॥

तोः षि ॥ ४३ ॥

शात् ॥ ४४ ॥

यरो ऽनुनासिके ऽनुनासिको वा ॥ ४५ ॥

१ यरोऽनुनासिके प्रत्यये भाषायां नित्य-वचनम् ।

अचो रहाभ्यां द्वे ॥ ४६ ॥

अनचि च ॥ ४७ ॥

१ द्विर्वचने यणो मयः ।

२ शरः खयः ।

३ अवसाने च ।

नादिन्याक्रोशे पुत्रस्य ॥ ४८ ॥

१ नादिन्याक्रोशे पुत्रस्येति तत्परे च ।

२ वा हतजग्धपरे च ।

३ चयो द्वितीयाः शरि पौष्करसादेः ।

शरो ऽचि ॥ ४९ ॥

त्रिप्रभृतिषु शाकटायनस्य ॥ ५० ॥

सर्वत्र शाकल्यस्य ॥ ५१ ॥

दीर्घादाचार्याणाम् ॥ ५२ ॥

झलां जश् झशि ॥ ५३ ॥

अभ्यासे चर्च ॥ ५४ ॥

खरि च ॥ ५५ ॥

वावसाने ॥ ५६ ॥

अणो ऽप्रगृह्यस्यानुनासिकः ॥ ५७ ॥

अनुस्वारस्य ययि परसवर्णः ॥ ५८ ॥

वा पदान्तस्य ॥ ५९ ॥

तोर्लि ॥ ६० ॥

उदः स्थास्तम्भोः पूर्वस्य ॥ ६१ ॥

१ उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानम् ।

झयो हो ऽन्यतरस्याम् ॥ ६२ ॥

शश्छो ऽटि ॥ ६३ ॥

१ छत्वममि तच्छ्लोकेन तच्छ्मश्रुणेति प्रयो-जनम् ।

हलो यमां यमि लोपः ॥ ६४ ॥

झरो झरि सवर्णे ॥ ६५ ॥

१ प. पुस्तके इतः परमधिकम् । अनाम्नवतिनगरीणामिति वक्तव्यम् ।

१ झरो झरि सवर्णग्रहणं समसंख्यप्रतिषेधार्थम् ।

**उदात्तादनुदात्तस्य स्वरितः ॥ ६६ ॥**

**नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ॥ ६७ ॥**

**अ अ ॥ ६८ ॥**

१ अकारस्य प्रत्यापत्तौ दीर्घप्रतिषेधः ।

२ आदेशस्य चानण्त्वान्न सवर्णग्रहणम् ।

३ सिद्धं तु तपरनिर्देशात् ।

४ एकशेषनिर्देशाद्वा स्वरभिन्नानां भगवतः पाणिनेः सिद्धम् ।

॥ समाप्तम् ॥

---

## परिशिष्टवार्तिकानि कैयटाद्युक्तानि ।

अग्रग्रामाभ्यां नयतेर्णो वाच्यः । ३·२·६१.

अर्णसो लोपश्च । ५·२·१०९.

अवर्णान्ताद्वा । ६·३·९७.

अव्ययस्य च्वावीत्वं नेति वाच्यम् । ७·४·३२.

अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया । २·३·२३.

उशनसः संबुद्धौ वानङ् नलोपश्च वा वाच्यः। ७·१·८९.

ऋवर्णादपि । ५·३·८३.

एकाचो नित्यम् । ४·३·१४४.

ओतो णिदिति वाच्यम् । ६·१·९३.

कारके छे च न निषेधः । ६·३·९९.

कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरच् । ५·४·७५.

क्लित्यजादौ वा । ७·२·११४.

गतिकारकेतरपूर्वपदस्य यण् नेष्यते । ६·४·८२.

गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम् । १·४·३१.

गुणकर्मणि वेष्यते । २·३·६५.

झलादाविति वक्तव्यम् । ६·४·३२.

तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः । ७·४·५६.

त्यदादीनां फिञ्वा वाच्यः । ४·१·१५६.

त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् । ४·१·२७.

दोष उपसंख्यानम् । ७·३·५१.

पाशकल्पककाम्येष्विति वाच्यम् । ८·३·३८

मिथोऽनयोः समासे संख्या पूर्वं शब्दपरविप्रतिषेधात् । २·२·३५.

रादेशात्पूर्वविप्रतिषेधेन नुम् । ६·४·४.

वस्त्रात्समाच्छादने । ३·१·२१.

व्रताद्भोजनतन्निवृत्त्योः । ३·१·२१.

शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः । ६·३·१३०.

---

१ वै. का. प्र. पुस्तकेषु सूत्रे इतीत्यधिकम् । २ प. पुस्तके इतः परमाधिकम् । आदेशार्थं सवर्णार्थं मकारो विवृतः स्मृतः । आकारस्य तथा ह्रस्वस्तदर्थं पाणिनेर अ ।

श्वशुरस्योकाराकारलोपश्च । ४·१·६८

संख्याया नदीगोदावरीभ्यां च । ५·४·७५

सनिण्वुलि ल्युटि च न । ६·४·११२

संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगः । ८·१·१२

सामान्ये नपुंसकम् । २·४·१७

सृजेः श्रद्धोपपन्ने कर्तर्येव । ३·१·६३

सोपसर्गस्य न । ६·१·२८

हल्यादिभ्यो ग्रहणे । ३·१·२१

॥ समाप्तम् ॥

---

# धातुपाठः ।

१ भू सत्तायाम् ॥ उदात्तः परस्मैभाषः॥ २ एध वृद्धौ । ३ स्पर्ध संघर्षे । ४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । ५ बाधृ लोडने । ६ नाधृ । ७ नाधृ याच्ञोपतापैश्वर्याशीःषु । ८ दध धारणे । ९ स्कुदि आप्रवणे । १० श्विदि श्वैत्ये । ११ वदि अभिवादनस्तुत्योः । १२ भदि कल्याणे सुखे च । १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । १४ स्पदि किंचिच्चलने । १५ क्लिदि परिदेवने । १६ मुद हर्षे । १७ दद दाने । १८ ष्वद १९ स्वर्द आस्वादने । २० उर्द माने क्रीडायां च । २१ कुर्द २२ खुर्द २३ गुर्द २४ गुद क्रीडायामेव । २५ षूद क्षरणे । २६ ह्राद अव्यक्ते शब्दे । २७ ह्लादी सुखे च । २८ स्वाद आस्वादने । २९ पर्द कुत्सिते शब्दे । ३० यती प्रयत्ने । ३१ युतृ ३२ जुतृ भासने । ३३ विथृ ३४ वेथृ याचने । ३५ श्रथि शैथिल्ये । ३६ ग्रथि कौटिल्ये । ३७ कत्थ श्लाघायाम् ॥ एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः॥ ३८ अत सातत्यगमने । ३९ चिती संज्ञाने । ४० च्युतिर् आसेचने । ४१ श्च्युतिर् क्षरणे । ४२ मन्थ विलोडने । ४३ कुथि ४४ पुथि ४५ लुथि ४६ मथि हिंसासंक्लेशनयोः । ४७ षिध गत्याम् । ४८ षिधू शास्त्रे माङ्गल्ये च । ४९ खाद भक्षणे । ५० खद स्थैर्ये हिंसायां च । ५१ बद स्थैर्ये । ५२ गद व्यक्तायां वाचि । ५३ रद विलेखने । ५४ णद अव्यक्ते शब्दे । ५५ अर्द गतौ याचने च । ५६ नर्द ५७ गर्द शब्दे ५८ तर्द हिंसायाम् । ५९ कर्द कुत्सिते शब्दे । ६० खर्द दन्दशूके । ६१ अति ६२ अदि बन्धने । ६३ इदि परमैश्वर्ये । ६४ बिदि

अवयवे ॥ भिदि इत्येके ॥ ६५ गडि वदनैकदेशे । ६६ णिदि कुत्सायाम् । ६७ टुनदि समृद्धौ । ६८ चदि आह्लादे । ६९ त्रदि चेष्टायाम् । ७० कदि ७१ क्रदि ७२ क्लदि आह्वाने रोदने च । ७३ क्लिदि परिदेवने । ७४ शुन्ध शुद्धौ ॥ अतादय उदात्ता उदात्तेतः परस्मैभाषः ॥ ७५ शीकृ सेचने । ७६ लोकृ दर्शने । ७७ श्लोकृ संघाते । ७८ द्रेकृ ७९ ध्रेकृ शब्दोत्साहयोः । ८० रेकृ शङ्कायाम् । ८१ सेकृ ८२ स्रेकृ ८३ स्रकि ८४ श्रकि ८५ श्लकि गतौ ८६ शकि शङ्कायाम् । ८७ अकि लक्षणे । ८८ वकि कौटिल्ये । ८९ मकि मण्डने । ९० कक लौल्ये । ९१ कुक ९२ वृक आदाने । ९३ चक तृप्तौ प्रतिघाते च । ९४ ककि ९५ वकि ९६ श्वकि ९७ त्रकि ९८ ढौकृ ९९ त्रौकृ १०० ष्वष्क १०१ वस्क १०२ मस्क १०३ टिकृ १०४ टीकृ १०५ तिकृ १०६ तीकृ १०७ रघि १०८ लघि गत्यर्थाः ॥ तृतीयो दन्त्यादिरित्येके । लघि भोजननिवृत्तावपि ॥ १०९ अघि ११० वघि १११ मघि गत्याक्षेपे । मघि कैतवे च ॥ ११२ राघृ ११३ लाघृ ११४ द्राघृ सामर्थ्ये ॥ ध्राघृ इत्यपि केचित् । द्राघृ आयामे च ॥ ११५ श्लाघृ कत्थने ॥ शीकादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ ११६ फक्क नीचैर्गतौ । ११७ तक हसने । ११८ तकि कृच्छ्रजीवने । ११९ बुक्क भषणे । १२० कख हसने । १२१ ओखृ १२२ राखृ १२३ लाखृ १२४ द्राखृ १२५ ध्राखृ शोषणालमर्थयोः । १२६ शाखृ १२७ श्लाखृ व्याप्तौ । १२८ उख १२९ उखि १३० वख १३१ वखि १३२ मख १३३ मखि १३४ णख १३५ णखि १३६ रख १३७ रखि १३८ लख १३९ लखि १४० इख १४१ इखि १४२ ईखि १४३ वल्ग १४४ रगि १४५ लगि १४६ अगि १४७ वगि १४८ मगि १४९ तगि १५० त्वगि १५१ श्रगि १५२ श्लगि १५३ इगि १५४ रिगि १५५ लिगि गत्यर्थाः ॥ रिख त्रख त्रिखि शिखि इत्यपि केचित् । त्वगि कम्पने च ॥ १५६ युगि १५७ जुगि १५८ वुगि वर्जने । १५९ घघ हसने । १६० मघि मण्डने । १६१ शिघि आघ्राणे ॥ फक्कादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ १६२ वर्च दीप्तौ । १६३ षच सेचने सेवने च । १६४ लोचृ दर्शने । १६५ शच व्यक्तायां वाचि । १६६ श्वच १६७ श्वचि गतौ । १६८ कच बन्धने । १६९ कचि १७० काचि दीप्तिबन्धनयोः । १७१ मच १७२ मुचि कल्कने ॥ कथन इत्यन्ये ॥ १७३ मचि धारणोच्छ्रायपूजनेषु । १७४ पचि व्यक्तीकरणे । १७५ ष्टुच प्रसादे । १७६ ऋज गतिस्थानार्जनोपार्जनेषु । १७७ ऋजि १७८ भृजी भर्जने । १७९ एजृ १८० भ्रेजृ १८१ भ्राजृ दीप्तौ । १८२ ईज गतिकुत्सनयोः ॥ वर्चादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ १८३ शुच शोके । १८४ कुच शब्दे तारे । १८५ कुन्च १८६ क्रुन्च कौटिल्याल्पीभावयोः । १८७ लुन्च

अपनयने । १८८ अन्चु गतिपूजनयोः । १८९ वन्चु १९० चन्चु १९१ तन्चु १९२ त्वन्चु १९३ म्रुन्चु १९४ म्लुन्चु १९५ म्रुचु १९६ म्लुचु गत्यर्थाः । १९७ ग्रुचु १९८ ग्लुचु १९९ कुजु २०० खुजु स्तेयकरणे । २०१ ग्लुन्चु २०२ षस्ज गतौ । २०३ गुजि अव्यक्ते शब्दे । २०४ अर्च पूजायाम् । २०५ म्लेछ अव्यक्ते शब्दे । २०६ लछ २०७ लाछि लक्षणे । २०८ वाछि इच्छायाम् । २०९ आछि आयामे । २१० ह्रीछ लज्जायाम् । २११ हुर्छा कौटिल्ये । २१२ मुर्छा मोहसमुच्छ्राययोः । २१३ स्फुर्छा विस्तृतौ । २१४ युछ प्रमादे । २१५ उछि उञ्छे । २१६ उछी विवासे । २१७ ध्रज २१८ ध्रजि २१९ धृज २२० धृजि २२१ ध्वज २२२ ध्वजि गतौ । २२३ कूज अव्यक्ते शब्दे । २२४ अर्ज २२५ षर्ज अर्जने । २२६ गर्ज शब्दे । २२७ तर्ज भर्त्सने । २२८ कर्ज व्यथने । २२९ खर्ज पूजने च । २३० अज गतिक्षेपणयोः । २३१ तेज पालने । २३२ खज मन्थे । २३३ खजि गतिवैकल्ये । २३४एजृ कम्पने । २३५ टुओस्फूर्जा वज्रनिर्घोषे । २३६ क्षि क्षये । २३७ क्षीज अव्यक्ते शब्दे । २३८ लज २३९ लजि भर्जने । २४० लाज २४१ लाजि भर्त्सने च । २४२ जज २४३ जजि युद्धे । २४४ तुज हिंसायाम् । २४५ तुजि पालने । २४६ गज २४७ गजि २४८ गृज २४९ गृजि २५० मुज २५१ मुजि शब्दार्थाः । गज मदने च । २५२ वज २५३ व्रज गतौ ॥ शुचादय उदात्ता उदात्तेतः (क्षिवर्जं) परस्मैभाषाः ॥ २५४ अट्ट अतिक्रमहिंसयोः । २५५ वेष्ट वेष्टने । २५६ चेष्ट चेष्टायाम् । २५७ गोष्ट २५८ लोष्ट संघाते । २५९ घट्ट चलने । २६० स्फुट विकसने । २६१ अठि गतौ । २६२ वठि एकचर्यायाम् । २६३ मठि २६४ कठि शोके । २६५ मुठि पालने । २६६ हेठ विबाधायाम् । २६७ एठ च । २६८ हिडि गत्यनादरयोः । २६९ हडि संघाते । २७० कुडि दाहे । २७१ वडि विभाजने । २७२ मडि च । २७३ भडि परिभाषणे । २७४ पिडि संघाते । २७५ मुडि मार्जने । २७६ तुडि तोडने । २७७ हुडि वरणे ॥ हरण इत्येके ॥ २७८ चडि कोपे । २७९ शडि रुजायां संघाते च । २८० तडि ताडने । २८१ पडि गतौ । २८२ कडि मदे । २८३ खडि मन्थे । २८४ हेडृ २८५ होडृ अनादरे । २८६ बाडृ आप्लाव्ये । २८७ द्राडृ २८८ ध्राडृ विशरणे । २८९ शाडृ श्लाघायाम् ॥ अट्टादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ २९० शौटृ गर्वे । २९१ यौटृ बन्धे । २९२ म्लेटृ २९३ म्रेडृ उन्मादे २९४ कटे वर्षावरणयोः ॥ चटे इत्येके ॥ २९५ अट २९६ पट गतौ । २९७ रट परिभाषणे । २९८ लट बाल्ये । २९९ शट रुजाविशरणगत्यवसादनेषु । ३०० वट वेष्टने । ३०१ किट ३०२ खिट त्रासे ।

३०३ शिट ३०४ षिट अनादरे। ३०५ जट ३०६ झट संघाते। ३०७ भट भृतौ। ३०८ तट उच्छ्राये। ३०९ खट काङ्क्षायाम्। ३१० णट नृतौ। ३११ पिट शब्दसंघातयोः। ३१२ हट दीप्तौ। ३१३ षट अवयवे। ३१४ लुट विलोडने॥ डान्तोऽयमित्येके॥ ३१५ चिट परप्रेष्ये। ३१६ विट शब्दे। ३१७ विट आक्रोशे॥ हिट इत्येके॥ ३१८ इट ३१९ किट ३२० कटी गतौ। ३२१ मडि भूषायाम्। ३२२ कुडि वैकल्ये। ३२३ मुड ३२४ प्रुड मर्दने। ३२५ चुडि अल्पीभावे। ३२६ मुडि खण्डने। पुडि चेत्येके॥ ३२७ रुटि ३२८ लुटि स्तेये॥ रुठि लुठि इत्येके॥ रुडि लुडि इत्यपरे॥ ३२९ स्फुटिर् विशरणे॥ स्फुटि इत्यपि केचित्॥ ३३० पठ व्यक्तायां वाचि। ३३१ वठ स्थौल्ये। ३३२ मठ मदनिवासयोः। ३३३ कठ कृच्छ्रजीवने। ३३४ रट परिभाषणे॥ रठ इत्येके॥ ३३५ हठ प्लुतिशठत्वयोः॥ बलात्कार इत्यन्ये॥ ३३६ रुठ ३३७ लुठ ३३८ उठ उपघाते॥ ऊठ इत्येके॥ ३३९ पिठ हिंसासंक्लेशनयोः। ३४० शठ कैतवे च। ३४१ शुठ प्रतिघाते॥ शुठि इति स्वामी। ३४२ कुठि च। ३४३ लुठि आलस्ये प्रतिघाते च। ३४४ शुठि शोषणे ३४५ रुठि ३४६ लुठि गतौ। ३४७ चुड्ड भावकरणे। ३४८ अड्ड अभियोगे। ३४९ कड्ड कार्कश्ये॥ चुड्डादयस्त्रयो दोपधाः॥ ३५० क्रीड़ृ विहारे। ३५१ तुड़ृ तोडने॥ तूड़ृ इत्येके॥ ३५२ हुड़ृ ३५३ हूड़ृ ३५४ होड़ृ गतौ। ३५५ रौड़ृ अनादरे। ३५६ रोड़ृ ३५७ लोड़ृ उन्मादे। ३५८ अड उद्यमे। ३५९ लड विलासे॥ लल इत्येके॥ ३६० कड मदे॥ कडि इत्येके॥ ३६१ गडि वदनैकदेशे॥ शौटादय उदात्ता उदात्तेतः परस्मैभाषाः॥ ३६२ तिपृ ३६३ तेपृ ३६४ ष्टिपृ ३६५ ष्टेपृ क्षरणार्थाः॥ तेपृ कम्पने च॥ ३६६ ग्लेपृ दैन्ये। ३६७ टुवेपृ कम्पने। ३६८ केपृ ३६९ गेपृ ३७० ग्लेपृ च। ३७१ मेपृ ३७२ रेपृ ३७३ लेपृ गतौ॥ ३७४ त्रपूष् लज्जायाम्। ३७५ कपि चलने। ३७६ रबि ३७७ लबि ३७८ अबि शब्दे। ३७९ लबि अवस्रंसने च। ३८० कबृ वर्णे। ३८१ क्लीबृ अधार्ष्ट्ये। ३८२ क्षीबृ मदे। ३८३ शीभृ कत्थने। ३८४ चीभृ च। ३८५ रेभृ शब्दे॥ अभिरभी क्वचित्पठ्येते॥ ३८६ ष्टभि ३८७ स्कभि प्रतिबन्धे। ३८८ जभि ३८९ जृभि गात्रविनामे। ३९० शल्भ कत्थने। ३९१ वल्भ भोजने। ३९२ गल्भ धार्ष्ट्ये। ३९३ श्रम्भु प्रमादे॥ दन्त्यादिश्च॥ ३९४ ष्टुभु स्तम्भे॥ तिप्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः। तिपिस्त्वनुदात्तः॥ ३९५ गुपू रक्षणे। ३९६ धूप संतापे। ३९७ जप ३९८ जल्प व्यक्तायां वाचि। जप मानसे च। ३९९ चप सान्त्वने। ४०० षप समवाये। ४०१ रप ४०२ लप व्यक्तायां वाचि। ४०३ चुप मन्दायां गतौ। ४०४

तुप ४०५ तुन्प ४०६ त्रुप ४०७ त्रुन्प ४०८ तुफ ४०९ तुन्फ ४१० त्रुफ ४११ त्रुन्फ हिंसार्थाः। ४१२ पर्प ४१३ रफ ४१४ रफि ४१५ अर्ब ४१६ पर्ब ४१७ लर्ब ४१८ बर्ब ४१९ मर्ब ४२० कर्ब ४२१ खर्ब ४२२ गर्ब ४२३ शर्ब ४२४ षर्ब ४२५ चर्ब गतौ। ४२६ कुबि आच्छादने। ४२७ लुबि ४२८ तुबि अर्दने। ४२९ चुबि वक्त्रसंयोगे। ४३० पृभु ४३१ पृन्भु हिंसार्थौ। षिभु षिन्भु इत्येके॥ ४३२ शुभ ४३३ शुन्भ भाषणे॥ भासन इत्येके। हिंसायामित्यन्ये॥ गुपादय उदात्ता उदात्तेतः परस्मैभाषाः॥ ४३४ घिणि ४३५ घुणि ४३६ घृणि ग्रहणे। ४३७ घुण ४३८ घूर्ण भ्रमणे। ४३९ पण व्यवहारे स्तुतौ च। ४४० पन च। ४४१ भाम क्रोधे। ४४२ क्षमूष् सहने। ४४३ कमु कान्तौ॥ घिण्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः। ४४४ अण ४४५ रण ४४६ वण ४४७ भण ४४८ मण ४४९ कण ४५० क्वण ४५१ व्रण ४५२ भ्रण ४५३ ध्वण शब्दार्थाः॥ धण इत्यपि केचित्॥ ४५४ ओणृ अपनयने। ४५५ शोणृ वर्णगत्योः। ४५६ श्रोणृ संघाते। ४५७ श्लोणृ च। ४५८ पैणृ गतिप्रेरणश्लेषणेषु। ४५९ ध्रन शब्दे॥ बण इत्यपि केचित्॥ ४६० कनी दीप्तिकान्तिगतिषु। ४६१ ष्टन ४६२ वन शब्दे। ४६३ वन ४६४ षण संभक्तौ। ४६५ अम गत्यादिषु। ४६६ द्रम ४६७ हम्म ४६८ मीमृ गतौ। ४६९ चमु ४७० छमु ४७१ जमु ४७२ झमु अदने। ४७३ क्रमु पादविक्षेपे। अणादय उदात्ता उदात्तेतः परस्मैभाषाः॥ ४७४ अय ४७५ वय ४७६ पय ४७७ मय ४७८ चय ४७९ तय ४८० णय गतौ। ४८१ दय दानगतिरक्षणहिंसादानेषु। ४८२ रय गतौ। ४८३ ऊयी तन्तुसंताने। ४८४ पूयी विशरणे दुर्गन्धे च। ४८५ क्नूयी शब्दे उन्दे च। ४८६ क्ष्मायी विधूनने। ४८७ स्फायी ४८८ ओप्यायी वृद्धौ। ४८९ तायृ संतानपालनयोः। ४९० शल चलनसंवरणयोः। ४९१ वल ४९२ वल्ल संवरणे संचरणे च। ४९३ मल ४९४ मल्ल धारणे। ४९५ भल ४९६ भल्ल परिभाषणहिंसादानेषु। ४९७ कल शब्दसंख्यानयोः। ४९८ कल्ल अव्यक्ते शब्दे॥ अशब्द इति स्वामी॥ ४९९ तेवृ ५०० देवृ देवने। ५०१ षेवृ ५०२ गेवृ ५०३ ग्लेवृ ५०४ पेवृ ५०५ मेवृ ५०६ म्लेवृ सेवने॥ शेवृ खेवृ क्लेवृ इत्येके॥ ५०७ रेवृ प्लवगतौ॥ अयादय उदात्ता अनुदात्तेत आत्मनेभाषाः॥ ५०८ मव्य बन्धने। ५०९ सूर्क्ष्य ५१० ईर्क्ष्य ५११ ईर्ष्य ईर्ष्यार्थाः। ५१२ हय गतौ। ५१३ शुच्य अभिषवे॥ चुच्य इत्येके। ५१४ हर्य गतिकान्त्योः। ५१५ अल भूषणपर्याप्तिवारणेषु॥ अयं स्वरितेदित्येके॥ ५१६ ञिफला विशरणे। ५१७ मील ५१८ श्मील ५१९ स्मील ५२० क्ष्मील निमेषणे। ५२१ पील प्रतिष्टम्भे। ५२२ नील वर्णे।

शुचिवर्चस्*, २१ अण्डर*, २२ वर्चस्, २३ ओजस्, २४ सुरजस्*, २५ अरजस्, २६ बृहत, २७ नृषत्, २८ शुधि, २९ अधर। इति भृशादिः।

## १७५ भौरिक्यादयः ४, २, ५४.

१ भौरिकि, २ भौलिकि, ३ चौपयत*, ४ चैटयत ( चौटयत ), ५ काणेय, ६ वाणिजक, ७ वालिकाज्य ( वाणिकाज्य; वालिज, वालिज्यक का. ), ८ सैकयत ( शैकयत का. ), ९ वैकयत, १० वैपेय। इति भौरिक्यादिः।

## १७६ मध्वादयः ४, २, ८६.

१ मधु, २ बिस, ३ स्थाणु, ४ वेणु, ५ कर्कन्धु, ६ शमी, ७ करीर ( किरीर का. ), ८ हिम, ९ किशरा, १० शर्याण ( शर्पणा का. ), ११ मरुत्, १२ वार्दाली*, १३ शर, १४ इष्टका, १५ आसुति, १६ शक्ति, १७ आसन्दी, १८ शकल*, १९ शलाका, २० आमिषी ( आमिधी का. ), २१ इक्षु, २२ रोमन्, २३ रुष्टि ( मुष्टि, ह्रष्टि का. ), २४ रुष्य, २५ तक्षशिला, २६ खड ( खडा का. ), २७ वट*, २८ वेट ( वेटा का. ), २९ रम्य, ३० ऋक्ष, ३१ मरुव, ३२ दार्वाघाटा। इति मध्वादिः।

## १७७ मनोज्ञादयः ५, १, १३३.

१ मनोज्ञ, २ प्रियरूप, ३ अभिरूप, ४ कल्याण, ५ मेधाविन्, ६ आढ्य, ७ कुलपुत्र, ८ छान्दस, ९ छात्र, १० श्रोत्रिय, ११ चोर, १२ धूर्त, १३ विश्वदेव ( वैश्वदेव का. ), १४ युवन्, १५ कुपुत्र*, १६ ग्रामपुत्र, १७ ग्रामकुलाल*, १८ ग्रामषण्ड ( ग्रामड, ग्रामखण्ड का. ), १९ ग्रामकुमार, २० सुकुमार*, २१ बहुल, २२ अवश्यपुत्र ( अवश्य का. ), २३ अमुष्यपुत्र, २४ अमुष्यकुल, २५ सारपत्र*, २६ शतपुत्र, २७ कुशल, २८ अहोपुरुष। इति मनोज्ञादिः।

## १७८ मयूरव्यंसकादयः २, १, ७२.

१ मयूरव्यंसक, २ छात्रव्यंसक, ३ कम्बोजमुण्ड ( काम्बोज° का. ), ४ यवनमुण्ड; ५ छन्दसि हस्तेगृह्य ( हस्त° ), ६ पादेगृह्य (पाद°), ७ लाङ्गूलगृह्य (लाङ्गूले°; लाङ्गले° का. ), ८ पुनर्दाय, ९ एहीडादयो ऽन्यपदार्थे, १० एहीडं वर्तते, ११ एहियवं वर्तते, १२ एहिवाणिजा क्रिया, १३ अपेहिवाणिजा, १४ प्रेहिवाणिजा, १५ एहिस्वागता, १६ अपेहिस्वागता, १७ एहिद्वितीया, १८ अपेहिद्वितीया, १९ प्रेहिद्वितीया*, २० एहिकटा*, २१ अपेहिकटा ( अपोहकटा का. ), २२ प्रेहिकटा ( प्रोहकटा का. ), २३ आहरकरटा*, २४ प्रेहिकर्दमा*, २५ प्रोहकर्दमा, २६ विधमचूडा*, २७ उद्धरचूडा ( उद्धमचूडा ), २८ आहरचेला, २९ अहरवासना, ३० आहरसेना*, ३१ आहरविनता ( आहरवानिता का. ), ३२ कृन्तविचक्षणा, ३३ उद्धरोत्सृजा, ३४ उद्धरावसृजा*, ३५ उद्धमविधमा, ३६ उत्पचानिपचा ( °विपचा का. ), ३७ उत्पतनिपता, ३८ उच्चावचम्, ३९ उच्चनीचम्, ४० आचोपचम्*, ४१ आचपराचम्*, ४२ नखप्रचम्, ४३ निश्चप्रचम्, ४४ अकिंचन, ४५ स्नात्वाकालक, ४६ पीत्वास्थिरक, ४७ भुक्त्वासुहित, ४८ प्रोष्यपापीयान्, ४९ उत्पत्यपाकला ( उत्पत्यव्याकुला का ), ५० निपत्यरोहिणी, ५१ निषण्ण(ण)श्यामा, ५२ अपेहिप्रघसा, ५३ एहिविघसा, ५४ इहपञ्चमी, ५५ इहद्वितीया, ५६ जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभि दधाति, ५७ जहिजोडम् ( °जोडः का. ), ५८

जहिस्तम्बम् ( °स्तम्बः का. ), ५९ उज्जहिस्तम्बम् ( °स्तम्बः का. ), ६० आख्यातमाख्यातेन क्रियासातत्ये, ६१ अश्नीतपिबता, ६२ पचतभृज्जता, ६३ खादतमोदता, ६४ खादताचमता (खादतवमता), ६५ आहरनिवपा, ६६ आवपनिष्किरा ( आहरनिष्किरा ), ६७ उत्पचविपचा, ६८ भिन्द्धिलवणा, ६९ कृन्द्धिविचक्षणा ( छिन्द्धि° का. ), ७० पचलवणा, ७१ पचप्रकूटा, ७२ प्रेहिस्वागता, ७३ अपोहकर्दमा, ७४ अचितोपचितम्, ७५ अवचितपराचितम्, ७६ उज्जहिजोडः । आकृतिगणः तेन । ७७ अकुतोभयः, ७८ कांदिशीकः, ७९ आहोपुरुषिका, ८० अहमहमिका, ८१ यदृच्छा, ८२ एहिरेयाहिरा, ८३ उन्मृजावमृजा, ८४ द्रव्यान्तरम्, ८५ अवश्यकार्यम् । इति मयूरव्यंसकादिः ।

## १७९ महिष्यादयः ४, ४, ४८.

१ महिषी, २ प्रजापति*, ३ प्रजावती, ४ प्रलेपिका, ५ विलेपिका, ६ अनुलेपिका, ७ पुरोहित, ८ मणिपाली, ९ अनुचारक ( अनुवारक ), १० होतृ, ११ यजमान । इति माहिष्यादिः ।

## १८० मालादयः ६, २, ८८.

१ माला, २ शाला, ३ शोणा ( शोण ), ४ द्राक्षा, ५ स्राक्षा*, ६ क्षामा, ७ काञ्ची, ८ एक, ९ काम, १० क्षौमा । इति मालादिः ।

## १८१ मुचादयः ७, १, ५९.

( गणपाठे १४३१–१४३८ द्रष्टव्याः )

## १८२ यजादयः ६, १, १५.

( गणपाठे १००२–१०१० द्रष्टव्याः )

## १८३ यवादयः ८, २, ९.

१ यव, २ दल्मि, ३ ऊर्मि ( उर्मि ), ४ भूमि, ५ कृमि, ६ क्रुञ्चा, ७ वशा, ८ द्राक्षा, ९ ध्राक्षा*, १० ध्रजि, ११ ध्वजि, १२ निजि*, १३ सिजि ( सिञ्जि का. ), १४ सञ्जि, १५ हरित्, १६ ककुद्, १७ मरुत्*, १८ गरुत्, १९ इक्षु, २० द्रु*, २१ मधु, २२ द्रुम, २३ मण्ड, २४ धूम, २५ वृक्षा, २६ वेशा, २७ वाजि, २८ शाञ्जि । आकृतिगणः । इति यवादिः ।

## १८४ यस्कादयः २, ४, ६३.

१ यस्क, २ लह्य ( लभ्य का. ), ३ द्रुह्य ( दुह्य का. ), ४ अयःस्थूण, ५ तृणकर्ण, ६ सदामत्त, ७ कम्बलहार ( कम्बलभार का. ), ८ बहिर्योग ( अहिर्योग का. ), ९ कर्णाढक ( कर्णाटक का. ), १० पर्णाढक*, ११ पिण्डीजङ्घ, १२ बकसक्थ, १३ विश्रि, १४ कुद्रि, १५ अजबस्ति, १६ मित्रयु, १७ रक्षोमुख ( रक्षामुख का. ), १८ जङ्घारथ, १९ उत्कास, २० कटुक ( कटुकमन्थक का. ), २१ मथक ( मन्थक ), २२ पुष्करसद्, २३ विषपुट, २४ उपरिमेखल, २५ क्रोष्टुमान, २६ क्रोष्टुपाद, २७ क्रोष्टुमाय*, २८ शीर्षमाय, २९ खरप, ३० पदक, ३१ वर्षुक ( वर्मक का. ), ३२ भलन्दन, ३३ भडिल, ३४ भण्डिल, ३५ भडित, ३६ भण्डित, ३७ बस्ति, ३८ कद्रु । इति यस्कादिः ।

## १८५ याजकादयः २, २, ९; ६, २, १५१.

१ याजक, २ पूजक, ३ परिचारक, ४ परिषेचक ( परिवेषक का. ), ५ स्नापक ( स्नातक का. ), ६ अध्यापक, ७ उत्साहक ( उत्सादक का. ), ८ उद्वर्तक, ९

होतृ, १० भर्तृ, ११ रथगणक, १२ पत्तिगणक । इति याजकादिः ।

### १८६ यावादयः ५, ४, २९.

१ याव, २ मणि, ३ अस्थि, ४ तालु*, ५ जानु*, ६ लान्द्र*, ७ पीत, ८ स्तम्ब ( पीतस्तम्ब, पीत, स्तम्ब का. ), ९ ऋतावुष्णशीते, १० पशौ लूनविपाते ( °वियाते का. ), ११ अणु ( अण्ड ) निपुणे, १२ पुत्र कृत्रिमे, १३ स्नात वेदसमाप्तौ, १४ शून्य रिक्ते, १५ दान कुत्सिते, १६ तनु सूत्रे, १७ ईयसश्च ( श्रेयस्क कां. ), १८ ज्ञात, १९ अज्ञात*, २० कुमारीक्रीडनकानि च, २१ चण्ड । इति यावादिः ।

### १८७ युक्तारोह्यादयः ६, २, ८१.

१ युक्तारोही, २ आगतरोही, ३ आगतयोधी, ४ आगतवञ्ची, ५ आगतनन्दी ( आगतनर्दी का. ), ६ आगतप्रहारी, ७ आगतमत्स्यः ( °मत्स्या का. ), ८ क्षीरहोता, ९ भगिनीभर्ता, १० ग्रामगोधुक्, ११ अश्वत्रिरात्रः, १२ गर्गत्रिरात्रः, १३ व्युष्टित्रिरात्रः, १४ गणपादः ( शणपादः का. ), १५ एकशितिपात्, १६ पात्रेसंमितादयश्च ( पात्रेसमि° ), १७ समपादः । इति युक्तारोह्यादि ।

### १८८ युवादयः ५, १, १३०.

१ युवन्, २ स्थविर, ३ होतृ, ४ यजमान, ५ पुरुषासे ( पुरुष असमासे ), ६ भ्रातृ ( भातृ का. ), ७ कुतुक ( कतक का. ), ८ श्रमण ( श्रणम ), ९ कटुक*, १० कमण्डलु, ११ कुस्त्री, १२ सुस्त्री, १३ दुःस्त्री, १४ सुहृदय, १५ दुर्हृदय, १६ सुहृद्, १७ दुर्हृद्, १८ सुभ्रातृ, १९ दुर्भ्रातृ, २० वृषल, २१ परिव्राजक, २२ सब्रह्मचारिन्, २३ अनृशंस, २४ हृदयासे ( हृदय असमासे ), २५ कुशल, २६ चपल, २७ निपुण, २८ पिशुन, २९ कुतूहल, ३० क्षेत्रज्ञ, ३१ श्रोत्रियस्य यलोपश्च, ३२ यातृ, ३३ कृतक, ३४ कुचुक, ३५ कन्दुक, ३६ मिथुन, ३७ कुलली, ३८ महस्, ३९ कितव, ४० पोत । इति युवादिः ।

### १८९ यौधेयादयः ४, १, १७६.

१ यौधेय, २ शौक्रेय, ३ शौभ्रेय, ४ ज्याबाणेय ( ग्रावाणेय का. ), ५ धौर्तेय ( घार्तेय, धार्तेय का. ), ६ त्रिगर्त, ७ भरत, ८ उशीनर, ९ वार्त्तेय । इति यौधेयादिः ।

### १९० यौधेयादयः ५, ३, ११७.

१ यौधेय, २ कौशेय, ३ शौक्रेय, ४ शौभ्रेय, ५ घार्तेय*, ६ धार्तेय ( धौर्तेय ), ७ ज्याबाणेय ( जाबालेय का. ), ८ त्रिगत, ९ भरत, १० उशीनर, ११ क्रौशेय, १२ वार्त्तेय । इति यौधेयादिः ।

### १९१ रजतादयः ४, ३, १५२.

१ रजत, २ सीस, ३ लोह, ४ उदुम्बर, ५ नीप ( नीच, नील का. ), ६ दारु, ७ रोहीतक ( रोहितक का. ), ८ विभीतक, ९ पीतदारु ( कपीत, दारु का. ), १० तीव्रदारु ११ त्रिकण्टक, १२ कण्टकार । इति रजतादिः ।

### १९२ रथादयः ७, २, ४५.

( धातुपाठे ११९४-१२०१ द्रष्टव्याः )

### १९३ रसादयः ५, २, ९५.

१ रस, २ रूप, ३ वर्ण*, ४ गन्ध, ५ स्पर्श, ६ शब्द, ७ स्नेह, ८ भाव*, ९ गुणात् ( गुणग्रहणं रसादीनां विशेषणम् का. ), १० एकाचः ( स्ववत् का. ) । इति रसादिः ।

## १९४ राजदन्तादयः २, २, ३१.

१ राजदन्तः, २ अग्रेवणम्, ३ लिप्तवासितम्, ४ नग्नमुषितम्, ५ सिक्तसंमृष्टम्, ६ मृष्टलुञ्चितम्, ७ अवक्लिन्नपक्वम्, ८ अर्पितोप्तम् ( अर्पितोतम् ), ९ उप्तगाढम्, १० उलूखलमुसलम्, ११ तण्डुलकिण्वम्, १२ दृषदुपलम्, १३ आरग्वायनवन्धकी, १४ चित्ररथवाह्लीकम् ( °बाह्लीकम् का. ), १५ अवन्त्यश्मकम् ( आ° का. ), १६ शूद्रार्यम्, १७ स्नातकराजानौ, १८ विष्वक्सेनार्जुनौ, १९ अक्षिभ्रुवम्, २० दारगवम्, २१ शब्दार्थौ, २२ कामर्थौ ( धर्मार्थौ ), २३ अर्थशब्दौ, २४ अर्थधर्मौ, २५ अर्थकामौ, २६ वैकारिमतम्, २७ गोजवाजम् ( गाजवाजम्, गजवाजम् का. ), २८ गोपालधानीपूलासम्, २९ पूलासककुरण्डम् ( पूलासकारण्डम्, °ककरण्डम् का. ), ३० स्थूलासम् ( स्थूलपूलासम् ), ३१ उशीरबीजम्, ३२ जिज्ञास्थि*, ३३ सिञ्जाश्वत्थम् ( सिञ्जास्थम् का. ), ३४ चित्रास्वाती, ३५ भार्यापती, ३६ दंपती, ३७ जंपती, ३८ जायापती, ३९ पुत्रपती, ४० पुत्रपशू ( °पशु का. ), ४१ केशश्मश्रु ( श्मश्रुकेशौ ), ४२ शिरोबीजम्, ४३ शिरोजानु*, ४४ सर्पिर्मधुनी, ४५ मधुसर्पिषी, ४६ आद्यन्तौ, ४७ अन्तादी, ४८ गुणवृद्धी, ४९ वृद्धिगुणौ। इति राजदन्तादिः।

## १९५ राजन्यादयः ४, २, ५३.

१ राजन्य, २ आनृत*, ३ बाभ्रव्य, ४ शालङ्कायन, ५ देवयात ( दैववातव; देवयान का. ), ६ अव्रीड, ७ वरत्रा*, ८ जालंधरायण, ९ राजायन*, १० तेलु, ११ आत्मकामेय, १२ अम्बरीषपुत्र, १३ वसाति, १४ बैल्ववन, १५ शैलूष, १६ उदुम्बर, १७ तीव्र*, १८ बैल्वज ( बैल्वल का. ), १९ आर्जुनायन, २० संप्रिय, २१ दाक्षि, २२ ऊर्णनाभ, २३ आप्रीत, २४ वैतिल, २५ वात्रक। आकृतिगणः। इति राजन्यादिः।

## १९६ रुदादयः ७, २, ७६; ७, ३, ९८.

( धातुपाठे १०६७–१०७१ द्रष्टव्याः )

## १९७ रुधादयः ३, १, ७८.

( धातुपाठे १४३९–१४६३ द्रष्टव्याः )

## १९८ रेवत्यादयः ४, १, १४६.

१ रेवती, २ अश्वपाली, ३ मणिपाली, ४ द्वारपाली, ५ वृकवञ्चिन्, ६ वृकबन्धु, ७ वृकग्राह, ८ कर्णग्राह, ९ दण्डग्राह, १० ककुदाक्ष, ११ चामरग्राह, १२ कुक्कटाक्ष। इति रेवत्यादिः।

## १९९ रैवतिकादयः ४, ३, १३१.

१ रैवतिक, २ स्वापिशि, ३ क्षैमवृद्धि, ४ गौरग्रीवि ( गौरग्रीव ), ५ औदमेघि ( औदमेयि का. ), ६ औदवापि ( औदवाहि का. ), ७ बैजवापि। इति रैवतिकादिः।

## २०० लोमादयः ५, २, १००.

१ लोमन्, २ रोमन्, ३ बभ्रु, ४ हरि, ५ गिरि*, ६ कर्क*, ७ कपि, ८ मुनि, ९ तरु। इति लोमादिः।

## २०१ लोहितादयः ३, १, १३.

१ लोहित, २ चरित*, ३ नील, ४ फेन, ५ मद्र, ६ हरित, ७ दास*, ८ मन्द, ९ पीत। आकृतिगणः। इति लोहितादिः।

## २०२ लोहितादयः ४, १, १८.

( गर्गादिगणे २५–५९ द्रष्टव्याः )

## २०३ ल्वादयः ८, २, ४४.

( धातुपाठे १४८४–१४९१ द्रष्टव्याः )

## २०४ वंशादयः ५, १, ५०.

१ वंश, २ कुटज, ३ बल्वज, ४ मूल, ५ स्थूणा ( स्थूण ), ६ अक्ष, ७ अश्मन्, ८ अश्व, ९ श्लक्ष्ण*, १० इक्षु, ११ खट्वा । इति वंशादिः ।

## २०५ वनस्पत्यादयः ६, २, १४०.

१ वनस्पतिः, २ बृहस्पतिः, ३ शचीपतिः ४ तनूनपात्, ५ नराशंसः, ६ शुनःशेपः ( °शेफः ), ७ शण्डामर्कौ, ८ तृष्णावरूत्री, ९ लम्बाविश्ववयसौ ( बम्बा° का. ), १० मर्मृत्युः । इति वनस्पत्यादिः ।

## २०६ वरणादयः ४, २, ८२.

१ वरणा ( वरण का. ), २ शृङ्गी, ३ शाल्मलि, ४ शुण्डी*, ५ शयाण्डी*, ६ पर्णी, ७ ताम्रपर्णी, ८ गोद ( पूर्वौ गोदौ, पूर्वेण गोदौ, अपरेण गोदौ का. ), ९ आलिङ्ग्यायन, १० जानपदी ( जालपदी, जालपद का. ), ११ जम्बू*, १२ पुष्कर*, १३ चम्पा*, १४ पम्पा*, १५ वल्गु*, १६ उज्जयनी ( उज्जयिनी का. ), १७ गया, १८ मथुरा, १९ तक्षशिला, २० उरसा ( उरशा का. ), २१ गोमती*, २२ वलभी*, २३ कटुकबदरी ( कन्दुक° ), २४ शिरीषाः, २५ काञ्ची, २६ सदाण्वी, २७ वणिकि २८ वाणिक । आकृतिगणः । इति वरणादिः ।

## २०७ वराहादयः ४, २, ८०.

१ वराह, २ पलाश ( पलाशा ), ३ शिरीष ( शेरिष ), ४ पिनद्ध, ५ निबद्ध, ६ बलाह*, ७ स्थूल ( स्थूण का. ), ८ विदग्ध, ९ विजग्ध, १० विभग्न, ११ निमग्न*, १२ बाहु, १३ खदिर, १४ शर्करा, १५ विनद्ध, १६ विरुद्ध, १७ मूल । इति वराहादिः ।

## २०८ वर्ग्यादयः ६, २, १३१.

१ दिगादिषु ( ११६ ) वर्गादयस्त एव कृतयदन्ता वर्ग्यादयः । इति वर्ग्यादिः ।

## २०९ वसन्तादयः ४, २, ६३.

१ वसन्त, २ ग्रीष्म*, ३ वर्षा, ४ शरद् ( शरद ), ५ हेमन्त, ६ शिशिर, ७ प्रथम, ८ गुण, ९ चरम, १० अनुगुण, ११ अथर्वन्, १२ आथर्वण*, १३ अपर्वन् । इति वसन्तादिः ।

## २१० वाकिनादयः ४, १, १५८.

१ वाकिन, २ गौधेर ( गारेध का. ), ३ कार्कष ( कार्कट्य का. ), ४ काक, ५ लङ्का, ६ चर्मिवर्मिणोर्नलोपश्च । इति वाकिनादिः ।

## २११ विनयादयः ५, ४, ३४.

१ विनय, २ समय, ३ उपायो ( उपायाद् का. ) ह्रस्वत्वं च ( औपयिक ), ४ संप्रति*, ५ संगति, ६ कथंचित्, ७ अकस्मात्, ८ समाचार, ९ उपचार, १० समयाचार ( समाय ), ११ व्यवहार, १२ संप्रदान, १३ समुत्कर्ष, १४ समूह, १५ विशेष, १६ अत्यय, १७ आस्थि, १८ कण्डु । इति विनयादिः ।

## २१२ विमुक्तादयः ५, २, ६१.

१ विमुक्त, २ देवासुर, ३ रक्षोऽसुर, ४ उपसद्, ५ सुवर्ण ( सुपर्ण का. ), ६ परि-

सारक ( परिषादक का. ), ७ सदसत्, ८ वसु, ९ मरुत् ( मरुत्वत् का. ), १० पत्नीवत्, ११ वसुमत्, १२ महीयत्व ( महीयल का. ), १३ सत्वत्, १४ बर्हवत्*, १५ दशार्ण, १६ दशार्ह, १७ वयस् ( दशार्हपयस् का. ), १८ हविर्धान, १९ पतत्रिन् ( पतत्रि का. ), २० महित्री, २१ अस्यहत्य, २२ सोमापूषन्, २३ इडा, २४ अग्नाविष्णु ( °विष्णू का. ), २५ उर्वशी, २६ वृत्रहन् ( वृत्रहति का. ), २७ मित्री, २८ सोम, २९ हेतु। इति विमुक्तादिः।

## २१३ विस्पष्टादीनि ६, २, २४.

१ विस्पष्ट, २ विचित्र, ३ विचित्त*, ४ व्यक्त, ५ संपन्न, ६ पटु ( कटु का. ), ७ पण्डित, ८ कुशल, ९ चपल, १० निपुण, इति विस्पष्टादिः।

## २१४ वृत् ( वृतादयः ) ३, ३, ९२; ७, २, ५९.

( धातुपाठे ७५८–७६२ द्रष्टव्याः )

## २१५ वृषादयः ६, १, १९९.

१ वृषः, २ जनः, ३ ज्वरः, ४ ग्रहः, ५ हयः, ६ गयः, ७ नयः, ८ तायः*, ९ तयः, १० चयः*, ११ अमः*, १२ वेदः, १३ सूदः*, १४ अंशः, १५ गुहा, १६ शमरणौ संज्ञायां संमतौ भावकर्मणोः; १७ मन्त्र, १८ शान्तिः, १९ कामः, २० यामः, २१ आरा, २२ धारा, २३ कारा, २४ वहः, २५ कल्पः, २६ पादः, २७ पयः, २८ दव। आकृतिगणः। तेन अविहितलक्षणमाद्युदात्तत्वं वृषादिषु ज्ञेयम्। इति वृषादिः।

## २१६ वेतनादयः ४, ४, १२

१ वेतन, २ वाहन ( वाह का. ), ३ अर्धवाहन ( अर्धवाह का. ), ४ धनुर्दण्ड, ५ जाल, ६ वेश ( वेस ! का. ), ७ उपवेश ( उपवेष, उपवेस (!) का. ), ८ प्रेषण, ९ उपवस्ति ( उपस्ति का. ), १० सुख, ११ शय्या, १२ शक्ति, १३ उपनिषद्, १४ उपदेश, १५ स्फिज्* ( स्फिज् ), १६ पाद, १७ उपस्थ*, १८ उपस्थान, १९ उपहस्त*, २० स्रज्। इति वेतनादिः।

## २१७ व्याघ्रादयः २, १, ५६.

१ व्याघ्र, २ सिंह, ३ ऋक्ष, ४ ऋषभ, ५ चन्दन, ६ वृक ( वृक्ष का. ), ७ वृष, ८ वराह, ९ हस्तिन्, १० तरु*, ११ कुञ्जर, १२ रुरु, १३ पृषत् ( पृषत का. ), १४ पुण्डरीक, १५ पलाश, १६ कितव, १७ बलाहक ( का. )। आकृतिगणोऽयम्। तेन मुखपद्मम्, १९ मुखकमलम्, २० करकिसलयम्, २१ पार्थिवचन्द्रः। इति व्याघ्रादिः।

## २१८ व्युष्टादयः ५, १, ९७.

१ व्युष्ट, २ नित्य, ३ निष्क्रमण, ४ प्रवेशन, ५ उपसंक्रमण, ६ तीर्थ, ७ अस्तरण ( आस्तरण का. ), ८ संग्राम, ९ संघात, १० अग्निपद, ११ पीलुमूल, १२ प्रवास, १३ उपवास, १४ संभ्रम, १५ दीर्घ। इति व्युष्टादिः।

## २१९ व्रीह्यादयः ५, २, ११६.

१ व्रीहि, २ माया, ३ शाला ( शालि का. ), ४ शिखा, ५ माला, ६ मेखला, ७ केका*, ८ अष्टका, ९ पताका, १० चर्मन्, ११ कर्मन्, १२ वर्मन्*, १३ दंष्ट्रा, १४

संज्ञा, १५ वडबा, १६ कुमारी, १७ नौ, १८ वीणा, १९ बलाका, २० यवखद ( यवखदनौ ), २१ शीर्षाच्छत्रः, २२ हंसा (!) । इति व्रीह्यादिः ।

## २२० शाण्डिकादयः ४, ३, ९२.

१ शण्डिक, २ सर्वसेन, ३ सर्वकेश, ४ शक, ५ शट ( सट का. ), ६ रक, ७ शङ्ख, ८ बोध । इति शाण्डिकादिः ।

## २२१ शमादयः ३, २, १४१; ७, ३, ७४.

( धातुपाठे १२०२–१२०९ द्रष्टव्याः )

## २२२ शरत्प्रभृतयः ५, ४, १०७.

१ शरद्, २ विपाश्, ३ अनस्, ४ मनस्, ५ उपानह्, ६ अनडुह्, ७ दिव्, ८ हिमवत्, ९ हिरुक्*, १० विद्*, ११ सद्*, १२ दिश्, १३ दृश्, १४ विश्*, १५ चतुर्, १६ त्यद्*, १७ तद्, १८ यद्, १९ कियत्*, २० जराया जरस् च, २१ प्रतिपरस्समनुभ्योऽक्ष्णः, २२ पथिन्, २३ सदृश् । इति शरदादिः ।

## २२३ शरादयः (१) ४, ३, १४२.

१ शर, २ दर्भ, ३ मृद् ( मृत् ), ४ कुटी, ५ तृण, ६ सोम, ७ बल्वज (बल्बज का.) । इति शरादिः ।

## २२४ शरादयः (२) ६, ३, ११९.

१ शर, २ वंश, ३ धूम, ४ आहि, ५ कपि, ६ माणि, ७ मुनि, ८ शुचि, ९ हनु । इति शरादिः ।

## २२५ शर्करादयः ५, ३, १०७.

१ शर्करा, २ कपालिका, ३ कपाटिका*, ४ कनिष्ठिका*, ( कपिष्ठिका, पिष्टिका, कनिष्ठिक ), ५ पुण्डरीक, ६ शतपत्त्र, ७ गोलोमन्, ८ लोमन*, ९ गोपुच्छ, १० नराची ( नरालि का. ), ११ नकुल ( नकुला का. ), १२ सिकता । इति शर्करादिः ।

## २२६ शाखादयः ५, ३, १०३.

१ शाखा, २ मुख, ३ जघन, ४ शृङ्ग, ५ मेघ, ६ अभ्र*, ७ चरण, ८ स्कन्ध (स्कद्), ९ स्कन्द*, १० उरस्, ११ शिरस्, १२ अग्र, १३ शरण (शाण) । इति शाखादिः।

## २२७ शार्ङ्गरवादयः ४, १, ७३.

१ शार्ङ्गरव, २ कापटव, ३ गौग्गुलव, ४ ब्राह्मण, ५ बैद्* ( का. ), ६ गौतम, ७ कामण्डलेय, ८ ब्राह्मणकृतेय ( ब्राह्मकृतेय का. ), ९ आनिचेय, १० आनिधेय, ११ आशोकेय, १२ वात्स्यायन, १३ मौञ्जायन, १४ कैकस ( कैकसेय का. ), १५ काप्य ( काव्य ), १६ शैव्य, १७ एहि, १८ पर्येहि, १९ आश्मरथ्य, २० औदपान, २१ अराल, २२ चण्डाल, २३ वतण्ड, २४ भोगवद्गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम्, २५ नृनरयोर्वृद्धिश्च । इति शार्ङ्गरवादिः ।

## २२८ शिवादयः ४, १, ११२.

१ शिव, २ प्रोष्ठ ( प्रौष्ठ का. ), ३ प्रोष्ठिक*, ४ चण्ड, ५ जम्भ ( भण्ड का. ), ६ भूरि, ७ दण्ड*, ८ कुठार, ९ ककुभ* ( ककुभा ), १० अनभिम्लान ( अनभिग्लान का. ), ११ कोहित*, १२ सुख*, १३ संधि, १४ मुनि, ( ककुत्स्थ ) १५

कहोड, १६ कोहड, १७ कहूय ( कहूष का. ), १८ कहय*, १९ रोध, २० कपिञ्जल* ( कुपि° ), २१ खञ्जन, २२ वतण्ड, २३ तृणकर्ण ( तूणकर्ण का. ), २४ क्षीरह्रद, २५ जलह्रद, २६ परिल, २७ पथिक*, ( पाथिक ), २८ पिष्ट, २९ हैहय ( हेहय का. ), ३० पार्षिका ( परिषिक का. ), ३१ गोपिका*, ३२ कपिलिका*, ३३ जटिलिका ( जटिलिक का. ), ३४ बधिरिका, ३५ मञ्जीरक, ३६ मजिरक*, ३७ वृष्णिक, ३८ खञ्जार, ३९ खञ्जाल, ४० कर्मार*, ४१ रेख, ४२ लेख, ४३ आलेखन, ४४ विश्रवण, ४५ रवण ( खण का. ), ४६ वर्तनाक्ष, ४७ ग्रीवाक्ष, ४८ विटप*, ४९ पिटक, ५० पिटाक, ५१ तृक्षाक, ५२ नभाक, ५३ ऊर्णनाभ, ५४ जरत्कारु, ५५ पृथा*, ५६ उत्क्षेप ( उत्क्षिपा का. ), ५७ पुरोहितिका*, ५८ सुरोहितिका*, ५९ सुरोहिका, ६० आर्यश्वेत ( अर्य° ), ६१ सुपिष्ट, ६२ मसुरकर्ण ( मसूर° का. ), ६३ मयूरकर्ण, ६४ खर्जुरकर्ण ( खर्जूर° का. ), ६५ खदूरक ( खडरक का. ), ६६ तक्षन्, ६७ ऋष्टिषेण, ६८ गङ्गा, ६९ विपाश ( विपाश, विपाशा का. ), ७० यस्क, ७१ लह्य, ७२ द्रुह्य ( द्रुघ का. ), ७३ अयःस्थूण, ७४ तृण, ७५ कर्ण ( तृणकर्ण ), ७६ पर्ण, ७७ भलन्दन, ७८ विरूपाक्ष, ७९ भूमि, ८० इला, ८१ सपत्नी, ८२ द्र्यचो नद्याः, ८३ त्रिवेणी त्रिवणं च, ८४ गोफिलिक, ८५ रोहितिक, ८६ कबोध, ८७ गोभिलिक, ८८ राजल, ८९ तडाक, ९० वडाक, ९१ परल । आकृतिगणः । इति शिवादिः ।

## २२९ शुण्डिकादयः ४, ३, ७६.

१ शुण्डिक, २ कृकण, ३ स्थण्डिल, ४ उदपान, ५ उपल, ६ तीर्थ, ७ भूमि, ८ तृण, ९ पर्ण । इति शुण्डिकादिः ।

## २३० शुभ्रादयः ४, १, १२३.

१ शुभ्र, २ विष्टपुर ( विष्ट, पुर ) ३ ब्रह्मकृत, ४ शतद्वार, ५ शलाथल ( शलाचल का. ), ६ शलाकाभ्रू, ७ लेखाभ्रू ( लेखाभ्र ), ८ विकास* ( विकंसा ), ९ रोहिणी, १० रुक्मिणी, ११ धर्मिणी*, १२ दिश् ( दिशा का. ), १३ शालूक, १४ अजवस्ति, १५ शकान्धि, १६ विमातृ, १७ विधवा, १८ शुक*, १९ विश*, २० देवतर*, २१ शकुनि*, २२ शुक्र*. २३ उग्र, २४ शतल* ( शातल ), २५ बन्धकी, २६ सृकण्डु ( कृकण्डु सृकण्ड का. ) २७ विस्त्रि*, २८ अतिथि*, २९ गोदन्त*, ३० कुशाम्ब*, ३१ मकष्टु, ३२ शाताहर*, ३३ पवष्टुरिक*, ३४ सुनामन्, ३५ लक्ष्मणश्यामयोर्वासिष्ठे ( लक्षण का. ), ३६ गोधा, ३७ कृकलास, ३८ अणीव, ३९ प्रवाहण, ४० भारत ( भरत ), ४१ भरम ( भारम का. ), ४२ मृकण्डु, ४३ कर्पूर, ४४ इतर, ४५ अन्यतर, ४६ आलीढ, ४७ सुदन्त ( सुदत्त का. ), ४८ सुदक्ष*, ४९ सुवक्षस् ( सुचक्षस् का. ), ५० सुदामन्*, ५१ कद्रु, ५२ तुद, ५३ अकशाय ( अकशाप का. ) ५४ कुमारिका, ५५ कुठारिका*, ५६ किशोरिका, ५७ अम्बिका, ५८ जिह्माशिन् ( जिह्माशिन का. ) ५९ परिधि, ६० वायुदत्त, ६१ शकल, ६२ शलाका*, ६३ खडूर ( खड्वर का. ), ६४ कुवेरिका ( कुवेणिका का. ), ६५ अशोका, ६६ गन्धपिङ्गला ( शुद्धपिङ्गला का. ) ६७ खडोन्मत्ता, ६८ अनुदृष्टि ( अनुदृष्टिन् ), ६९ जरतिन्, ७० बलीवर्दिन् ( बालि° का. ), ७१ विग्र ( विग्रज का. ), ७२ बीज, ७३ जीव*, ७४ श्वन्, ७५ अश्मन्, ७६ अश्व, ७७ अजिर, ७८ शतावर, ७९ शलाका, ८०

कृकसा, ८१ भरत, ८२ मघष्टु, ८३ ककल, ८४ स्थूल, ८५ मकथु, ८६ यमष्टु, ८७ कष्टु, ८८ मृकण्ड, ८९ गुद, ९० रूद, ९१ कुशेरिका, ९२ शबल, ९३ आजिन। आकृतिगणः तेन। ९४ गङ्गा, ९५ पाण्डु। इति शुभ्रादिः।

## २३१ शौण्डाः २, १, ४०.

१ शौण्ड, २ धूर्त, ३ कितव, ४ व्याड, ५ प्रवीण, ६ संवीत, ७ अन्तर, ८ अधि, ९ पटु (आधिपटु का.), १० पण्डित, ११ कुशल, १२ चपल, १३ निपुण, ( १४ संव्याड, १५ मन्थ, १६ समीर. ) एते शब्दाः पुस्तकान्तरे न दृश्यन्ते। इति शौण्डादयः।

## २३२ शौनकादयः ४, ३, १०६.

१ शौनक, २ वाजसनेय, ३ शार्ङ्गरव, ४ शापेय ( सांपेय का. ), ५ शाष्पेय (शाखेय का.), ६ खाडायन, ७ स्तम्भ (स्कम्भ का.), ८ स्कन्ध, ९ देवदर्शन, १० रज्जुभार, ११ रज्जुकण्ठ, १२ कठशाठ, १३ कषाय (कशाय का.), १४ तल*, १५ दण्ड*, १६ पुरुषांसक (पुरुषासक का.), १७ अश्वपेज (अश्वपेय का.), १८ साङ्गरव, १९ स्कन्द, २० देवदत्तशठ, २१ तलवकर। इति शौनकादिः।

## २३३ श्रमणादयः २, १, ७०.

१ श्रमणा, २ प्रव्राजिता, ३ कुलटा, ४ गर्भिणी, ५ तापसी, ६ दासी, ७ बन्धकी, ८ अध्यापक, ९ आभिरूपक, १० पटु, ११ मृदु, १२ पण्डित, १३ कुशल, १४ चपल, १५ निपुण। इति श्रमणादिः।

## २३४ श्रेण्यादयः २, १, ५९.

१ श्रेणि, २ ऊक (एक का.), ३ पूग, ४ कुन्दुम (मुकुन्द कुन्द का.), ५ (राशि), ६ निचय, ७ (विशेष*), ८ निधन (निधान का.) ९ (पर*), १० इन्द्र, ११ देव, १२ मुण्ड, १३ भूत, १४ श्रवण, १५ वदान्य, १६ अध्यापक, १७ अभिरूपक*, १८ ब्राह्मण, १९ क्षत्रिय, २० विशिष्ट (विशिख का.), २१ पटु, २२ पण्डित, २३ कुशल, २४ चपल, २५ निपुण, २६ कृपण। इति श्रेण्यादिः।

## २३५ सख्यादयः ४, २, ८०.

१ सखि, २ अग्निदत्त, ३ वायुदत्त, ४ सखिदत्त, ५ गोपिल ( गोहित, गोहिल का. ), ६ भल्ल, ७ पाल (भल्लपाल), ८ चक्र ( चर्क का. ), ९ चक्रवाक*, १० छगल, ११ अशोक, १२ करवीर, १३ वासव*, १४ वीर*, १५ पूर*, १६ वज्र*, १७ कुशीरक*, १८ सीहर (शीहर; सीकर का.), १९ सरक (सकर का.), २० सरस, २१ समर*, २२ समल, २३ सुरस, २४ रोह, २५ तमाल, २६ कदल, २७ सप्तल, २८ चक्रपाल, २९ चक्रवाल, ३० वक्रपाल, ३१ उशीर। इति सख्यादिः।

## २३६ संकलादयः ४, २, ७५.

१ संकल, २ पुष्कल, ३ उत्तम*, ४ उडुप, ५ उद्वेप (उद्वप का.), ६ उत्पुट, ७ कुम्भ, ८ निधान (विधान का.), ९ सुदक्ष, १० सुदत्त, ११ सुभूत, १२ सुपूत*, १३ सुनेत्र, १४ सुमङ्गल*, १५ सुपिङ्गल, १६ सूत*, १७ सिकत (सिकता का.), १८ पूतिक (पूतिका; पूतीकी का.), १९ पूलास, २० कूलास, २१ पलाश, २२ निवेश. २३ गवेष (गवेश), २४ गम्भीर,

२५ इतर, २६ आन्*, २७ अहन्, २८ लोमन्, २९ वेमन्, ३० वरुण ( चरण ), ३१ बहुल, ३२ सद्योज, ३३ अभिषिक्त, ३४ गोभृत्, ३५ राजभृत्, ३६ भल्ल, ३७ मल्ल*, ३८ माल, ३९ शर्मन्, ४० गृह, ४१ भूत । इति संकलादिः ।

## २३७ संकाशादयः ४, २, ८०.

१ संकाश, २ काम्पिल ( कापिल ), ३ कश्मीर ( कश्मर का. ), ४ समीर, ५ सूरसेन ( शूर° का. ), ६ सरक*, ७ सूर*, ८ सुपन्थिन् ( सुपथिन् का. ) पन्थ ( सक्थ का. ) च, ९ यूप ( यूथ ), १० अंश, ११ अङ्ग*, १२ नासा*, १३ पालित*, १४ अनुनाश*, १५ अश्मन्, १६ कूट, १७ मलिन, १८ दश*, १९ कुम्भ*, २० शीर्ष*, २१ विरत ( चिरन्त; बिरत ! का. ), २२ समल*, २३ सीर*, २४ पञ्जर*, २५ मन्थ* ( पन्थ ), २६ नल*, २७ रोमन्*, २८ लोमन्*, २९ पुलिन*, ३० सुपरि*, ३१ कटिप*, ३२ सकर्णक*, ३३ वृष्टि*, ३४ तीर्थ, ३५ अगस्ति, ३६ विकर*, ३७ नासिका, ३८ एग, ३९ चिकार, ४० विरह इति संकाशादिः ।

## २३८ संतापादयः ५, १, १०१.

१ संताप, २ संनाह, ३ संग्राम, ४ संयोग, ५ संपराय, ६ संवेशन, ७ संपेष, ८ निष्पेष, ९ सर्ग, १० निसर्ग, ११ विसर्ग, १२ उपसर्ग, १३ प्रवास, १४ उपवास, १५ संघात, १६ संवेष*, १७ संवास*, १८ संमोदन, १९ सक्तु, २० मांसौदनाद्विगृहीतादपि, २१ असर्ग । इति संतापादिः ।

## २३९ संधिवेलादयः ४, ३, १६.

१ सांधिवेला, २ संध्या, ३ अमावास्या, ४ त्रयोदशी, ५ चतुर्दशी, ६ पञ्चदशी, ७ पौर्णमासी, ८ प्रतिपद्, ९ संवत्सरात्फलपर्वणोः । इति संधिवेलादिः ।

## २४० सपत्न्यादयः ४, १, ३५.

१ समान, २ एक, ३ वीर, ४ पिण्ड, ५ श्व* ( शिरी ), ६ भ्रातृ, ७ भद्र*, ८ पुत्र, ९ दासाच्छन्दसि । इति सपत्न्यादिः ।

## २४१ सर्वादीनि १, १, २७.

१ सर्व, २ विश्व, ३ उभ, ४ उभय,

डतरादयः ७, १, २५.

५ डतर, ६ डतम, ७ अन्य, ८ अन्यतर, ९ इतर,

१० त्वत्, ११ त्व, १२ नेम, १३ सम, १४ सिम, १५ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्, १६ स्वमज्ञातिधनाख्यायाम्, १७ अन्तरं बहिर्योगोपसंव्यानयोः

त्यदादयः १, १, ७४; २, ७२; ३, २, ६०; ७, २, १०२.

१८ त्यद्, १९ तद्, २० यद्, २१ एतद्, २२ अदस्, २३ इदम्, २४ एक;

द्व्यादयः ५, ३, २.

२५ द्वि, २६ युष्मद्, २७ अस्मद्, २८ भवतु ( भवत् ), २९ किम् । इति सर्वादिः ।

## २४२ सवनादयः ८, ३, १०८.

१ सवने सवने, २ सूते सूते, ३ सोमे सोमे, ४ सवनमुखे सवनमुखे, ५ किंसः* किंसः ( किंस्यतीति किंसः का. ), ६ अनुसवनमनुसवनम्, ७ गोसनिं गोसनिम्, ८ अश्वसनिमश्वसनिन्, ९ सवने सवने, १० सवनमुखे* सवनमुखे*, ११ अनुसवनमनुसवनम् ( अनुसवने२ का. ), १२ संज्ञायां बृहस्पतिसवः, १३ शकुनिसवनम्, १४

सोमे सोमे, १५ सुते सुते ( सूते२ का. ), १६ संवत्सरे संवत्सरे, १७ बिसं* बिसम्*, १८ किंसं किंसम् ( किसं किसम् ), १९ मुसलं मुसलम्, २० गोसनिम्, २१ अश्वसनिम् । इति सवनादिः ।

## २४३ साक्षात्प्रभृतीनि १, ४, ७४.

१ साक्षात्, २ मिथ्या, ३ चिन्ता, ४ भद्रा, ५ रोचना ( लोचना का. ), ६ आस्था, ७ अमा, ८ अद्धा ( श्रद्धा का. ), ९ प्राजर्या, १० प्राजरुहा, ११ वीजर्या, १२ बीजरुहा ( बीज° का. ), १३ संसर्या, १४ अर्थे, १५ लवणम्, १६ उष्णम्, १७ शीतम्, १८ उदकम्, १९ आर्द्रम्, २० अग्नौ, २१ वशे, २२ विकसने ( विकम्पने का. ), २३ प्रसहने ( प्रहसने का. ), २४ प्रतपने, २५ प्रादुस्, २६ नमस्, ( २७ विभाषा, २८ संपत्का, २९ विहसने, ३० आविस् ) । आकृतिगणोयम् । इति साक्षाप्रभृतिः ।

## २४४ सिध्मादयः ५, २, ९७.

१ सिध्म, २ गडु, ३ मणि, ४ नाभि, ५ बीज ( जीव का. ), ६ वीणा*, ७ कृष्ण*, ८ निष्पाव, ९ पांसु, १० पार्श्व, ११ पर्शू ( परशु का. ), १२ हनु, १३ सक्तु, १४ मांस, १५ पार्ष्णिधमन्योर्दीर्घश्च (पार्ष्णील, धमनील का. ), १६ वातदन्तबलललाटानामूङ् च ( °ललाटगलानामूङ् च का; वातूल, दन्तूल, बलूल, ललाटूल, गलूल, का. ), १७ जटाघटाकटाकालाः ( कटा का. ) क्षेपे, १८ पर्ण, १९ उदक, २० प्रज्ञा, २१ सक्थि ( सर्ष्कि सक्थि का. ), २२ कर्ण, २३ स्नेह, २४ शीत, २५ श्याम, २६ पिङ्ग, २७ पित्त, २८ पुष्क ( शुष्क का. ), २९ पृथु, ३० मृदु, ३१ मञ्जु, ३२ मण्ड, ३३ पत्र, ३४ चटु, ३५ कपि, ३६ गण्डु ( कण्डु का. ), ३७ ग्रन्थि, ३८ श्री*, ३९ कुश*, ४० धारा*, ४१ वर्ष्मन्, ४२ पक्ष्मन्*, ४३ श्लेष्मन्, ४४ पेश*, ४५ निष्पाद्*, ४६ कुण्ड*, ४७ क्षुद्रजन्तूपतापयोश्च ( °तापाच्चेष्यते, यूकालः, मक्षिकालः, उपतापाच्च, विचर्चिकालः, विपादिकालः, मूर्छालः का. ), ४८ गण्ड, ४९ संज्ञा । इति सिध्मादिः ।

## २४५ सिन्ध्वादयः ४, ३, ९३.

१ सिन्धु, २ वर्णु, ३ मधुमत्, ४ कम्बोज, ५ साल्व, ६ कश्मीर, ७ गन्धार, ८ किष्किन्धा, ९ उरसा ( उरस का. ), १० दरद् ( दरद ), ११ गन्दिका ( गन्दिका का. ), १२ कुलुन, १३ दिरसा । इति सिन्ध्वादिः ।

## २४६ सुखादीनि (१) ३, १, १८; ६, २, १७०.

१ सुख, २ दुःख, ३ तृप्त ( तृप्र, तीव्र का. ), ४ कृच्छ्र, ५ अस्र, ६ आस्र*, ७ अलीक, ८ प्रतीप, ९ करुण, १० कृपण, ११ सोढ, १२ गहन । इति सुखादिः ।

## २४७ सुखादीनि (२ ) ५, २, १३१.

१ सुख, २ दुःख, ३ तृप्त, ४ कृच्छ्र, ५ आश्र ( आस्र, आम्र का. ), ६ अस्र*, ७ अलीक, ८ करुण ( करुणा का. ), ९ सोढ, १० प्रतीप ( प्रमीप ! का. ), ११ (शील, १२ हल, १३ माला क्षेपे, १४ कृपण, १५ प्रयाण ( प्रणय ), १६ दल*, १७ कक्ष*,) १ अतःपरं त. वि. पुस्तके नास्ति । इति सुखादिः ।

## २४८ सुतंगमादयः ४, २, ८०.

१ सुतंगम, २ मुनिचित ( °चित्त का. ), ३ विप्रचित ( °चित्त का. ), ४ महाचित्त*, ५ महापुत्र, ६ स्वन*, ७ श्वेत, ८ खडिक ( गडिक का. ), ९ शुक्र, १० विग्र, ११ बीजवापिन् ( बीज वापिन् ), १२ अर्जुन, १३ श्वन्, १४ अजिर, १५ जीव, १६ खण्डिन*, १७ कर्ण*, १८ विग्रह* । इति सुतंगमादिः ।

## २४९ सुवास्त्वादयः ४, २, ७७.

१ सुवास्तु ( सुवस्तु ), २ वर्णु, ३ भण्डु, ४ खण्डु ( कण्डु का. ), ५ सेवालिन् ( सेचालिन् का. ), ६ कर्पूरिन्, ७ शिखण्डिन, ८ गर्त, ९ कर्कश, १० शकटीकर्ण ( शटीकर्ण का. ), ११ कृष्णकर्ण ( कृष्ण का.), १२ कर्क, १३ कर्कन्धुमती (कर्कन्धू° का. ), १४ गोह ( गोह्य गाहि का. ), १५ अहिसक्थ । इति सुवास्त्वादिः ।

## २५० सुषामादयः ८, ३, ९८.

१ सुषामा, २ निःषामा, ३ दुःषामा*, ४ सुषेधः*, ५ निषेधः ( निःषेधः )*, ६ दुःषेधः, ७ सुषंधिः, ८ निःषंधिः ( निषंधिः का. ), ९ दुःषंधिः, १० सुष्टु ( सुष्ठु का. ), ११ दुष्टु ( दुष्ठु का. ), १२ गौरिषक्थः संज्ञायाम्, १३ प्रतिष्णिका, १४ जलाषाहम् ( जलाषाढम् ), १५ नौषेचनम् ( नौषेवनम् ! का. ), १६ दुन्दुभिषेवणम् ( दुन्दुभिषेचनम्; °षेवनम् ! का. ), १७ एति संज्ञायामगात्*, १८ हरिषेणः*, १९ नक्षत्राद्वा* २० रोहिणीषेणः* । आकृतिगणः । इति सुषामादिः ।

## २५१ स्थूलादयः ५, ४, ३.

१ स्थूल, २ अणु ( अण्ड ), ३ माष ( स्थूल अणु; माषेषु ), ४ इषु, ५ कृष्ण तिलेषु, ६ यव व्रीहिषु, ७ इक्षुतिल ( का. ) पाद्यकालावदाताः सुरायाम्, ८ गोमूत्र आच्छादने, ९ सुरा अहौ, १० जीर्ण शालिषु, ११ पत्रमूले समस्तव्यस्ते ( का. ), १२ कुमारीपुत्र, १३ कुमारीश्वशुर ( कुमार, श्वशुर का. ), १४ मणि । इति स्थूलादिः ।

## २५२ स्नात्व्यादयः ७, १, ४९.

१ स्नात्वी, २ पीत्वी । आकृतिगणः । इति स्नात्व्यादिः ।

## २५३ स्पादयः ६, १, १८४.

( धातुपाठे १०६८–१०७१ द्रष्टव्याः )

## २५४ स्वरादीनि १, १, ३७.

१ स्वर्, २ अन्तर्, ३ प्रातर्, एतेऽन्तोदात्ताः, ४ पुनर् ( आद्युदात्तः का. ), ५ सनुतर्, ६ उच्चैस्, ७ नीचैस्, ८ शनैस्, ९ ऋधक्, १० आरात्, ११ अन्तिकात्*, १२ ऋते, १३ युगपद्, १४ पृथक्, एत आद्युदात्ताः ( एतेऽपि सनुतर्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते का. ), १५ ह्यस्, १६ श्वस्, १७ दिवा, १८ रात्रौ, १९ सायम्, २० चिरम्, २१ मनाक्, २२ ईषत्, २३ शश्वत्*, २४ जोषम्, २५ तूष्णीम्, २६ बहिस् ( आविस् का. ), २७ अवस् (अधस् का. ), २८ समया, २९ निकषा, ३० स्वयम्, ३१ नक्तम्, ३२ नञ्, ३३ मृषा, ३४ हेतौ, ३५ हे*, ३६ है*, ३७ अद्धा, ३८ इद्धा, ३९ सामि, एते ऽन्तोदात्ताः ( ह्यस्प्रभृतयो ऽन्तोदात्ताः पठ्यन्ते का. ), ४० वत् ( वदन्तमव्ययसंज्ञं भवति, ब्राह्मणवत्, क्षत्रियवत् का. ), ४१ बत, ४२ सनत्, ४३ सनात्, ४४ तिरस्, एत आद्युदात्ताः, ४५ अन्तरा, अयमन्तोदात्तः, ४६ अन्तरेण, ४७ मक्*, ४८ ज्योक्, ४९ योक्*, ५०

नक्*, ५१ कम्, ५२ शम्, ५३ सना, ५४ सहसा, ५५ श्रद्धा*, ५६ अलम्, ५७ स्वधा, ५८ वषट्, ५९ विना, ६० नाना, ६१ स्वाति, ६२ अन्यद्, ६३ अस्ति, ६४ उपांशु, ६५ क्षमा, ६६ विहायसा, ६७ दोषा, ६८ मुधा, ६९ दिष्ट्या*, ७० वृथा*, ७१ मिथ्या, ७२ क्त्वातोसुन्कसुनः, ७३ कृन्मकारसंध्यक्षरान्तो ( कृन्मकारान्तः संध्यक्षरान्तो का. ) ऽव्ययीभावश्च, ७४ पुरा, ७५ मिथो, ७६ मिथस्, ७७ प्रायस्*, ७८ मुहुस्*, ७९ प्रवाहुकम्, ८० प्रवाहिका*, ८१ आर्यहलम्, ८२ अभीक्ष्णम्, ८३ साकम्, ८४ सार्धम्, ८५ सत्रम्*, ८६ समम्, ८७ नमस्, ८८ हिरुक्, ८९ तसिलादयस्तद्धिता एधाच्पर्यन्ताः-- शस्तसी, कृत्वसुच्, सुच्, आस्थालौ ( आच्थालौ का. ), च्व्यर्थाश्च, ९० अथ*, ९१ अम्, ९२ आम्, ९३ प्रताम्*, ९४ प्रशान्, ९५ प्रतान् ( आकृतिगणो ऽयम् । तेनान्ये ऽपि । तथाहि ), ९६ माङ्, ९७ श्रम्, ९८ कामम्, ९९ प्रकामम्, १०० भूयस्, १०१ परम्, १०२ साक्षात्, १०३ साचि (साचि), १०४ सत्यम्, १०५ मङ्क्षु, १०६ संवत्, १०७ अवश्यम्, १०८ सपदि, १०९ प्रादुस्, ११० आविस्, १११ अनिशम्, ११२ नित्यम्, ११३ नित्यदा, ११४ सदा, ११५ अजस्रम्, ११६ संततम्, ११७ उषा, ११८ ओम्, ११९ भूर्, १२० भुवर्, १२१ झटिति, १२२ तरसा, १२३ सुष्ठु, १२४ कु, १२५ अञ्जसा, १२६ अ, १२७ मिथु, १२८ विथक्, १२९ भाजक्, १३० अन्वक्, १३१ चिराय, १३२ चिरम्, १३३ चिररात्राय, १३४ चिरस्य, १३५ चिरेण, १३६ चिरात्, १३७ अस्तम्, १३८ आनुषक्, १३९ आनुषक्, १४० अनुषट्, १४१ अम्नस् ( अम्भस् ), १४२ अम्नर ( अम्नर् ), १४३ स्थाने, १४४ वरम्, १४५ दुष्ठु, १४६ बलात्, १४७ शु, १४८ अर्वाक्, १४९ शुदि, १५० वदि इत्यादयः* । )

१५१ तसिलादयः प्राक्पाशपः । १५२ शस्प्रभृतयः प्राक्समासान्तेभ्यः । १५३ मान्तः कृत्वोर्थाः । १५४ तसिवती । १५५ नानाञाविति । इति स्वरादिः ।

## २५५ स्वस्रादयः ४, १, १०.

१ स्वसृ, २ दुहितृ, ३ ननान्दृ, ४ यातृ, ५ मातृ, ६ तिसृ, ७ चतसृ । इति स्वस्रादिः ।

## २५६ स्वागतादीनि ७, ३, ७.

१ स्वागत, २ स्वध्वर, ३ स्वङ्ग, ४ व्यङ्ग, ५ व्यड, ६ व्यवहार, ७ स्वपति । इति स्वागतादिः ।

## २५७ स्वादयः १, ४, १७.

(अष्टाध्यायी सूत्रेषु ४·१·२–५·३·७० द्रष्टव्याः)

## २५८ स्वादयः ३, १, ७३.

( धातुपाठे १२४८–१२८१ द्रष्टव्याः )

## २५९ हरितादयः ४, १, १००.

( बिदादिषु ३०–५५ द्रष्टव्या. )

## २६० हरीतक्यादयः ४, ३, १६५.

१ हरीतकी, २ कोशातकी, ३ नखरजनी ( नखररजनी का. ), ४ शष्कण्डी ( शाकण्डी का. ), ५ दाडी, ६ दोडी, ७ श्वेतपाकी, ८ अर्जुनपाकी, ९ द्राक्षा, १० काला, ११ ध्वाक्षा ( ध्वाङ्क्षा का. ), १२ गभीका ( गर्गरिका का. ), १३ कण्टकारिका, १४ पिप्पली*, १५ चिम्बा* ( चिम्पा ), १६ शेफालिका, १७ दृढी । इति हरीतक्यादिः ।

२६१ हस्त्यादयः ५, ४, १३८.

१ हस्तिन, २ कुद्दाल*, ३ अश्व*, ४ काशिक*, ५ कुरुत, ६ कटोल, ७ कटोलक*, ८ गण्डोल, ९ गण्डोलक, १० कण्डोल*, ११ कण्डोलक*, १२ अज*, १३ कपोत*, १४ जाल*, १५ गण्ड*, १६ महेला ( महिला का. ), १७ दासी, १८ गणिका, १९ कुसूल । इति हस्त्यादिः ।¶

---

# वार्तिकस्थ-गणपाठः ॥

१ अग्निपदादयः ५, १, ९७, १.

१ अग्निपद, २ पीलुमूल ( पीलु, मूल ), ३ प्रवास, ४ उपवास । इत्यग्निपदादिः ।

अण्डादयः ६·३·४१·२.

( कुक्कुट्यादिषु द्रष्टव्याः )

२ अध्यात्मादयः ४, ३, ६० (टिप्पणीस्थे वार्तिके).

१ अध्यात्म, २ अधिदेव, ३ अधिभूत । इत्याध्यात्मादिः ।

३ अवान्तरदीक्षादयः ५, १, ९४, ३.

१ अवान्तरदीक्षा, २ तिलव्रत, ३ देवव्रत । इत्यवान्तरदीक्षादिः ।

४ अहरादयः ८, २, ७० (भाष्ये.)

१ अहर्, २ गीर्, ३ धूर् । इत्यहरादिः ।

५ आद्यादयः ५, ४, ४४, १.

१ आदि, २ मध्य, ३ अन्त, ४ पृष्ठ, ५ पार्श्व । इत्याद्यादिः । आकृतिगणः ।

६ इरिकादयः ८, ४, ६ (टिप्पण्याम्).

१ इरिका, २ मिरिका, ३ तिमिरा । इति इरिकादिः । आकृतिगणः ।

७ उपवस्त्रादयः ५, १, १९७ (भाष्ये).

१ उपवस्तृ, २ प्राशितृ, ३ चूडा, ४ श्रद्धा । इत्युपवस्त्रादिः ।

८ काण्यादयः ७, ४, ३. (भाष्ये).

१ कण, २ रण, ३ भण, ४ श्रण, ५ लुप, ६ हेठ, इति भाष्ये । ७ हायि, ८ वाणि ( चाणि ), ९ लोटि ( लोठि ), १० लोपि । इति त. वि. पुस्तके । इति कणादिः ।

९ कुक्कुट्यादयः ६, ३, ४१, २.

१ कुक्कुटी, २ मृगी, ३ काकी, ४ अण्ड, ५ पद, ६ शाव, ७ भ्रुकुंस, ८ भृकुटी । इति कुक्कुट्याद्यण्डादी ।

---

¶ यः शब्दः काशिकायां न दृश्यते स * एवं चिह्नेन दर्शितः। काशिकास्थः पाठभेदः का. इति निर्दिष्टः। तत्रतत्रोपलब्धाः पाठाः ( ) एवं चिह्नान्तर्गताः कृताः ।

## १० क्षिपकादयः ७, ३, ४५, ५.

१ क्षिपका, २ ध्रुवका, ३ चरका, ४ सेवका, ५ करका, ६ चटका, ७ अवका, ८ लहका, ९ अलका, १० कन्यका, ११ एडका । इति क्षिपकादिः । आकृतिगणः ।

## ११ खलादयः ४, २, ५१, १.

१ खलिनी, २ डूकिनी ( डाकिनी ), ३ उडुबिनी ( कुटुम्बिनी ), ४ डुमिणी, ५ अङ्गिनी, ६ गविनी, ७ रथितीं, ८ कुण्डलिनी । खलादिः ।

## १२ गिरिनद्यादयः ८, ४, १०, १.

१ गिरिनदी, २ गिरिनख, ३ गिरिगङ्ग' ४ गिरिनितम्ब, ५ चक्रनदी, ६ चक्रनितम्ब, ७ तूर्यमान, ८ माषोन, ९ आर्गयन । इति गिरिनद्यादिः ।

## १३ चातुर्वर्ण्यादयः ५, १, १२४, १.

१ चतुर्वर्ण, २ चतुर्वेद, ३ चतुराश्रम, ४ सर्वविद्य, ५ त्रिलोक, ६ त्रिस्वर, ७ षड्गुण, ८ सेना, ९ अनन्तर, १० संनिधि, ११ समीप, १२ उपमा, १३ सुख, १४ तदर्थ, १५ इतिह, १६ मणिक । इति चतुर्वर्णादिः ।

## १४ ज्योत्स्नादयः ५, २, १०३, २.

१ ज्योत्स्ना, २ तमिस्र, ३ कुण्डल, ४ कुतप, ५ विसर्प, ६ विपादिका । इति ज्योत्स्नादिः ।

## १५ त्रिचक्रादयः ६, २, १९९, १.

१ त्रिचक, २ त्रिवृत, ३ त्रिवङ्कर । इति त्रिचकादिः । आकृतिगणः ।

## १६ पत्यादयः ८, २, ७० (भाष्ये).

१ पति, २ गण, ३ पुत्र । इति पत्यादिः ।

## १७ परदारादयः ४, ४, १, ४.

१ परदार, २ गुरुतल्प । इति परदारादिः ।

## १८ परिमुखादयः ४, ३, ५८, १.

१ परिमुख, २ परिहनु, ३ पर्योष्ठ, ४ पर्युलूखल, ५ परिसीर, ६ उपसीर, ७ उपस्थूण, ८ उपकलाप, ९ अनुपथ, १० अनुपद, ११ अनुगङ्ग, १२ अनुतिल, १३ अनुसीत, १४ अनुसाय, १५ अनुसीर, १६ अनुमाष, १७ अनुयव, १८ अनुयूप, १९ अनुवंश, २० प्रतिशाक । इति परिमुखादिः ।

## १९ पार्श्वादयः ३, २, १५, १.

१ पार्श्व, २ उदर, ३ पृष्ठ, ४ उत्तान, ५ अवमूर्धन् । इति पार्श्वादिः ।

## २० पील्वादयः ६, ३, १२१ (टिप्पण्याम्).

१ पीलु, २ दारु, ३ रुचि, ४ चारु, ५ गम, ६ कम । इति पील्वादिः ।

## २१ पुण्याहवाचनादयः ५, १, १११, ३.

१ पुण्याहवाचन, २ स्वतिवाचन, ३ शान्तिवाचन । इति पुण्याहवाचनादिः ।

## २२ प्रकृत्यादयः २, ३, १८, १.

१ प्रकृति, २ प्राय, ३ गोत्र, ४ सम, ५ विषम, ६ द्विद्रोण, ७ पञ्चक, ८ साहस्र । इति प्रकृत्यादिः ।

२३ प्रभूतादयः ४, ४, १, २.

१ प्रभूत, २ पर्याप्त । इति प्रभूतादिः ।

२४ भवदादयः ५, ३, १४

( टिप्पणीस्थे वार्तिके ).

१ भवान्, (२) दीर्घायुः, ३ देवानां प्रिय, ४ आयुष्मान् । इति भवदादिः ।

२५ महानाम्न्यादयः ५, १, ९४, १.

१ महानाम्नी, २ आदित्यव्रत, ३ गोदान । इति महानाम्न्यादिः ।

२६ माशब्दादयः ४, ४, १, १.

१ माशब्दः, २ नित्यशब्दः, ३ कार्यशब्दः । इति माशब्दादिः ।

२७ मूलविभुजादयः ३, १, ५, २.

१ मूलविभुज, २ नखमुच, ३ काकगुह, ४ कुमुद, ५ महीध्र, ६ कुध्र, ७ गिध्र । आकृतिगणोयम् । इति मूलविभुजादिः ।

२८ शकन्ध्वादयः ६, १, ९३, ४.

१ शकन्धु, २ कर्कन्धु, ३ कुलटा, ४ सीमन्तः ५ केशवेशेषु, ६ हलीषा, ७ मनीषा, ८ लाङ्गलीषा, ९ पतञ्जलिः, १० सारङ्गः पशुपक्षिणोः । इति शकन्ध्वादिः ।

२९ शाकपार्थिवादयः

२, १, ६९, ८.

१ शाकपार्थिव, २ कुतपसौश्रुत, ३ अजातौल्वलि । आकृतिगणोऽयम् तेन । ४ कृत्वापकृत, ५ भुक्ताविभुक्त, ६ पीतविपीत, ७ गतप्रत्यागत, ८ यातानुयात, ९ क्रयाक्रयिका, १० पुटापुटिका, ११ फलाफलिका, १२ मानोन्मानिका । इति शाकपार्थिवादिः ।

३० संपादादयः ३, ३, १०८, ९.

१ संपद्, २ विपद्, ३ आपद्, ४ प्रतिपद्, ५ परिषद् । इति संपदादिः ।

३१ सुस्नातादयः ४, ४, १, ३.

१ सुस्नात, २ सुखरात्रि, ३ सुखशयन । इति सुस्नातादिः ।

३२ स्वर्गादयः ५, १, १११, २.

१ स्वर्ग, २ यशस्, ३ आयुस्, ४ काम, ५ धन । इति स्वर्गादिः । *

---

*अन्येऽप्येवंविधाः केचन गणा वार्तिकेषूपलभ्यन्ते। भाष्यकारेणापि तेषां विवेचनं व्यधायि । तादृशाः केचनाधस्तात् निर्दिश्यन्ते । तथाहि–

१ अश्वघासादयः २·१·३६·३.

१ अश्वघास, २ श्वश्रूसुर, ३ हस्तिविध

२ उपकूलादयः ४·३·५८·२

१ उपकूल, २ उपशाल ।

३ कम्बोजादयः ४·१·१७५·१.

१ कम्बोज, २ चोल, ३ केरल, ४ शक, ५ यवन इति काशिका. ६ कडेर इति भाष्यम् ।

४ खलतिकादयः १·२·५२·४.

५ खलादयः ४·२·५१·२.

१ खल, २ ऊक, ३ कुन्दुम ।

६ खलेयवादयः २·१·१७·२.

( तिष्ठद्गुप्रभृतिषु ४–११ द्रष्टव्याः )

७ देवासुरादयः ४·३·८८·१; १२५·१.

१ देव, २ रक्षस् ।

८ पादहारकादयः २·१·३३·२.

१ पादहारक, २ गलेचोपक ।

९ पावकादयः ७·३·४५·२.

१ पावकाः, २ अलोमकाः

१० पैङ्गाक्षीपुत्रादयः ४·२·२८·१.

१ पैङ्गक्षीपुत्र, २ तृणबिन्दु ।

११ प्रतिवेशादयः ६·३·१२२·२.

१ प्रतिवेश, २ प्रतिरोध ।

१२ ब्रह्मप्रजापत्यादयः ६·३·२·२६.

( दधिपयआदिषु ११३·४–६ द्रष्टव्याः )

१३ भुज्य्वादयः ७·१·१·२.

( सूत्रे ५·२·१३८ द्रष्टव्याः )

१४ मरुद्वृधादयः ६·२·१०६·२.

१५ यवखदादयः ५·२·११६·१.

( व्रीह्यादिषु द्रष्टव्याः )

१६ याज्ञवल्क्यादयः ४·२·६६·४.

( याज्ञवल्क्यानि, सौलभानि )

१७ रथकट्यादयः ७·३·४४·३.

१ रथकट्या, गर्गकाम्या ।

१८ रौढ्यादयः ४·१·७९·४.

( के पुनः रौढ्यादयः । ये क्रौड्यादयः ६७)

१९ वतण्ड्यादयः ६·३·३४·४.

२० विश्वजनादयः ६·१·७६·१.

१ विश्वजन, २ नच्छाया ।

२१ वृषलादयः ५·३·६६·३.

१ वृषल, २ दस्यु, ३ चोर ।

२२ वेदाध्यायादयः ३·२·१·१.

१ वेदाध्याय, २ चर्चापार, ३ शमनीपार ।

२३ व्यतीक्षादयः ३·३·४३·४.

१ व्यतीक्षा, २ व्यतीहा ।

२४ शिखादयः ५·२·११६·१.

( व्रीह्यादिषु द्रष्टव्याः )

२५ स्नात्वाकालकादयः ७·१·३४·४.

( मयूरव्यंसकादिषु १७८-४५-४७ द्रष्टव्याः)

वार्तिकस्थ-गणपाठः समाप्तः ।

# अन्तर्गण-सूत्राणि ।

( वर्णानुक्रमेण संगृहीतानि । प्रथमः गणस्यानुक्रमाङ्कः द्वितीयो गणान्तर्गतोऽनुक्रमाङ्कः )

अन्तर्गणसूत्राणि समाप्तानि ॥

# लिङ्गानुशासनम् ।



१ लिङ्गम् ।

२ स्त्री ।

३ ऋकारान्ता मातृदुहितृस्वसृपोतृनना-
न्दरः ।

४ अन्यूप्रत्ययान्तो धातुः ।

५ अशनिभरण्यरणयः पुंसि च ।

६ मिन्यन्तः ।

७ वह्निवृष्ण्यग्नयः पुंसि ।

८ श्रोणियोन्यूर्मयः पुंसि च ।

९ क्तिन्नन्तः ।

१० ईकारान्तश्च ।

११ ऊङ्याबन्तश्च ।

१२ य्वन्तमेकाक्षरम् ।

१३ विंशत्यादिरा नवतेः ।

१४ दुन्दुभिरक्षेषु ।

१५ नाभिरक्षत्रिये ।

१६ उभावन्यत्र पुंसि ।

१७ तलन्तः ।

१८ भूमिविद्युत्सरिल्लतावानिताभिधानानि ।

१९ यादो नपुंसकम् ।

२० भास्स्रुक्स्राग्दिग्दृगुष्णिगुपानहः ।

२१ स्थूणोर्णे नपुंसके च ।

२२ गृहशशाभ्यां क्लीबे ।

२३ प्रावृड्विप्रुड्रुट्त्विट्त्विषः ।

२४ दर्विविदिवेदिखनिशान्यश्रिवेशिकृ-
ष्योषधिकट्यङ्गुलयः ।

२५ तिथिनाडिरुचिवीचिनालिधूलिकिकि-
केलिच्छविरात्र्यादयः ।

२६ शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रु-
टिवलिपङ्क्तयः ।

२७ प्रतिपदापद्विपत्संपच्छरत्संसत्परिषदु-
षःसंवित्क्षुद्युन्मुत्सामिधः !

२८ आशीर्धूर्पूर्गीर्द्वारः ।

२९ अप्सुमनस्समासिकतावर्षाणां बहुत्वं
च ।

३० स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिचः ।

३१ तटिसीमासंबध्याः ।

३२ चूलिवेणिखार्यश्च ।

३३ ताराधाराज्योत्स्नादयश्च ।

३४ शलाका स्त्रियां नित्यम् ।

३५ पुमान् ।

३६ घञबन्तः ।

३७ घाजन्तश्च ।

३८ भयलिङ्गभगपदानि नपुंसके ।

१ न्यश्रि०

३९ नङन्तः ।

४० याच्ञा स्त्रियाम् ।

४१ क्यन्तो घुः ।

४२ इषुधिः स्त्री च ।

४३ देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि ।

४४ त्रिविष्टपत्रिभुवने नपुंसके ।

४५ द्यौः स्त्रियाम् ।

४६ इषुबाहू स्त्रियां च ।

४७ बाणकाण्डौ नपुंसके च ।

४८ नन्तः ।

४९ क्रतुपुरुषकपोलगुल्फमेधाभिधानानि ।

५० अभ्रं नपुंसकम् ।

५१ उकारान्तः ।

५२ धेनुरज्जुकुहुसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् ।

५३ समासे रज्जुः पुंसि च ।

५४ श्मश्रुजानुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके ।

५५ वसु चार्थवाचि ।

५६ मद्गुमधुशीधुसानुकमण्डलूनि नपुंसके च ।

५७ रुत्वन्तः ।

५८ दारुकसेरुजत्रुवस्तुमस्तूनि नपुंसके ।

५९ सक्तुर्नपुंसके च ।

६० प्राग्रश्मेरकारान्तः ।

६१ कोपधः ।

६२ चिबुकशालूकप्रातिपादिकांशुकोल्मुकानि ।

६३ कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकककटकदण्डकपिटकतालकफलकककल्कपुलाकानि नपुंसके च ।

६४ टोपधः ।

६५ किरीटमुकुटललाटवटवीटशृङ्गाटकरटलोष्ठानि नपुंसके ।

६६ कुटकूटकपटकपाटकर्पटनटानिकटकीटकटानि नपुंसके च ।

६७ णोपधः ।

६८ ऋणलवणपर्णतोरणरणोष्णानि नपुंसके च ।

६९ कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ।

७० थोपधः ।

७१ काष्ठपृष्ठरिक्थोक्थानि नपुंसके ।

७२ काष्ठा दिगर्था स्त्रियाम् ।

७३ तीर्थप्रोथयूथगाथानि नपुंसके च ।

७४ नोपधः ।

७५ जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके ।

७६ मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसंमानभवनवसनसंभावनविभावनाविमानानि नपुंसके च ।

७७ पोपधः ।

७८ पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ।

७९ शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ।

८० भोपधः ।

८१ तलभं नपुंसकम् ।

८२ जृम्भं नपुंसके च ।

८३ मोपधः ।

८४ रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ।

८५ संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च ।

८६ योपधः ।

८७ किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ।

८८ गोमयकषायमलयान्वयाव्ययानि नपुंसके च ।

८९ रोपधः ।

९० द्वाराग्रस्फारतक्रवक्रवप्राक्षिप्रक्षुद्रच्छिद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदरशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षेत्रक्षत्रमित्रकलत्रच्छत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्राख्रशस्त्रशास्त्रवस्त्रपत्रपात्रनक्षत्राणि नपुंसके ।

९१ शुक्रमदेवतायाम् ।

९२ चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ।

९३ षोपधः ।

९४ शिरीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ।

९५ यूषकरीषमिषविषवर्षाणि नपुंसके च ।

९६ सोपधः ।

९७ पनसबिसबुससाहसानि नपुंसके ।

९८ चमससरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च ।

९९ कंसं चाप्राणिनि ।

१०० रश्मिदिवसाभिधानानि ।

१०१ दीधितिः स्त्रियाम् ।

१०२ दिनाहनी नपुंसके ।

१०३ मानाभिधानानि ।

१०४ द्रोणाढकौ नपुंसके च ।

१०५ खारीमानिके स्त्रियाम् ।

१०६ दाराक्षतलाजासूनां बहुत्वं च ।

१०७ नाड्यपजनोपपदानि व्रणाङ्गपदानि ।

१०८ मरुद्गरुदुत्तरदृत्विजः ।

१०९ ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकपिमुनयः ।

११० ध्वजगजमुञ्जपुञ्जाः ।

१११ हस्तकुन्तान्तवातव्रातदूतधूर्तसूतचूतमुहूर्ताः ।

११२ षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ।

११३ वंशांशपुरोडाशाः ।

११४ ह्रदकन्दकुन्दबुद्बुदशब्दाः ।

११५ अर्धपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः ।

११६ पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गगन्धस्कन्धमृदङ्गसमुद्रपुङ्खाः ।
११७ सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः ।
११८ नपुंसकम् ।
११९ भावे ल्युडन्तः ।
१२० निष्ठा च ।
१२१ त्वष्यञौ तद्धितौ ।
१२२ कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ।
१२३ यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि ।
१२४ द्वन्द्वैकत्वम् ।
१२५ अभाषायां हेमन्तशिशिरावहोरात्रे च ।
१२६ अनञ्कर्मधारयस्तत्पुरुषः ।
१२७ अनल्पे छाया ।
१२८ राजामनुष्यपूर्वा सभा ।
१२९ सुरासेनाच्छायाशालानिशाः स्त्रियां च ।
१३० परवत् ।
१३१ अपथपुण्याहे नपुंसके ।
१३२ संख्यापूर्वा रात्रिः ।
१३३ द्विगुः स्त्रियां च ।
१३४ इसुसन्तः ।
२३५ आर्चिः स्त्रियां च ।
१३६ छदिः स्त्रियामेव ।
१३७ मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि ।
१३८ सीरार्थौदनाः पुंसि ।
१३९ वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च ।
१४० अटवी स्त्रियाम् ।
१४१ लोपधः ।
१४२ तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि ।
१४३ शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः पुंसि च ।
१४४ शतादिः संख्या ।
१४५ शतायुतप्रयुताः पुंसि च ।
१४६ लक्षा कोटिः स्त्रियाम् ।
१४७ सहस्रः पुंसि च ।
१४८ मन्द्व्यच्कोऽकर्तरि ।
१४९ ब्रह्मन्पुंसि च ।
१५० नामरोमणी नपुंसके ।
१५१ असन्तो द्व्यच्कः ।
१५२ अप्सराः स्त्रियाम् ।
१५३ त्रान्तः ।
१५४ यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ।
१५५ भृत्रामित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः । पुंसि ।
१५६ पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च ।
१५७ बलकुसुमशुल्बयुद्धपत्तनरणाभिधानानि ।
१५८ पद्मकमलोत्पलानि पुंसि च ।
१५९ आहवसङ्ग्रामौ पुंसि ।
१६० आजिः स्त्रियामेव ।
१६१ फलजातिः ।
१६२ वृक्षजातिः स्त्रियामेव ।
१६३ वियज्जगत्सकृत्शकन्पृषच्छकृद्यकृदुदश्वितः ।
१६४ नवनीतावतानृतामृतनिमित्तवित्तपित्तव्रतरजतवृत्तपलितानि ।

१६५ श्राद्धकुलिशदैवपीठकुण्डाङ्कदधिसक्थ्यक्ष्यस्थ्यास्पदाकाशकण्ववीजानि ।

१६६ दैवं पुंसि च ।

१६७ धान्याज्यसस्यरूप्यपण्यवर्ण्यधिष्ण्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि ।

१६८ द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचकवरवृन्दारकाणि ।

१६९ अक्षमिन्द्रिये ।

१७० स्त्रीपुंसयोः ।

१७१ गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः ।

१७२ मन्युसीधुकर्कन्धुसिन्धुकण्डुरेणवः ।

१७३ गुणवचनमुकारान्तं नपुंसकं च ।

१७४ अपत्यार्थतद्धिते ।

१७५ पुंनपुंसकयोः ।

१७६ घृतभूतमुस्तक्ष्वेलितैरावतपुस्तबुस्तलोहिताः ।

१७७ शृङ्गार्धनिदाघोद्यमशल्यदृढाः ।

१७८ व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः ।

१७९ कबन्धौषधायुधान्ताः ।

१८० दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशाङ्कुशकाशकुशकुलिशाः ।

१८१ गृहमेहदेहपट्टपटहाष्टापदार्बुदककुदाश्च ।

१८२ अवशिष्टालिङ्गम् ।

१८३ अव्ययं कतियुष्मदस्मदः ।

१८४ ष्णान्ता संख्या ।

१८५ गुणवचनं च ।

१८६ कृत्याश्च ।

१८७ करणाधिकरणयोर्ल्युट् ।

१८८ सर्वादीनि सर्वनामानि ।

लिङ्गानुशासनं समाप्तम् ॥

शाकटायनप्रणीतः

# उणादिसूत्रपाठः

१ कृवापाजिमिस्वदिसाध्यशूभ्य उण् ।

२ छन्दसीगः ।

३ दृसनिजनिचरिचटिभ्यो ञुण् ।

४ किंजरयोः श्रिणः ।

५ त्रो रश्च लः ।

६ कृके वचः कश्च ।

७ भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ।

८ अणश्च ।

९ धान्ये नित् । ( कटिवटिभ्यां च )

१० शृस्वृस्निहित्रप्यसिवासिहनिक्लिदिबन्धिमनिभ्यश्च ।

११ स्यन्देः संप्रसारणं धश्च ।

१२ उन्देरिचादेः ।

१३ ईषेः किच्च ।

१४ स्कन्देः सलोपश्च ।

१५ सृजेरसुम्च ।

१६ कृतेराद्यन्तविपर्ययश्च ।

१७ नावञ्चेः ।

१८ फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ।

१९ वलेर्गुक्च ।

२० शः कित्सन्वच्च ।

२१ यो द्वे च ।

२२ कुर्भ्रश्च ।

२३ पृभिदिव्यधिगृधिधृषिभ्यः ।

२४ कृग्रोरुच्च ।

२५ अपदुःसुषु स्थः ।

२६ रपेरिच्चोपधायाः ।

२७ अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकाराश्च ।

२८ प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ।

२९ लङ्घिबंह्योर्नलोपश्च ।

३० ऊर्णोतेर्नुलोपश्च ।

३१ महति ह्रस्वश्च ।

३२ श्लिषेः कश्च ।

३३ आङ्परयोः खनिशृभ्यां डिच्च ।

३४ हरिमितयोर्द्रुवः ।

३५ शते च ।

३६ खरु शङ्कु पीयु नीलङ्गु लिगु ।

३७ मृगय्वादयश्च ।

३८ मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ।

३९ व्यथेः संप्रसारणं किच्च ।

---

३ अ रहीत्यधिकम् । ९ अ क नास्ति । २३ अ उ. °धृषिदृशिभ्यः । २७ अ °तुग्घुग्दी° । क °पंसि° । उ. °पंशि° २९ अ लघि° । क रङ्घिलङ्घिबंहिभ्यो नलोपश्च । ३६ क °लिग्वङ्गुपङ्गुहिङ्गुशवः । ३९ अ व्यथेः संप्रसारणं धः किच्च ।

४० मुकुरदर्दुरौ ।
४१ मद्गुरादयश्च ।
४२ असेरुरन् ।
४३ मसेश्च ।
४४ शावशेराप्तौ ।
४५ अविमह्योष्टिषच् ।
४६ अमेर्दीर्घश्च ।
४७ रुहेर्वृद्धिश्च ।
४८ तवेर्णिद्वा ।
४९ नञि व्यथेः ।
५० किलेर्बुक्च ।
५१ इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ।
५२ अशेर्णित् ।
५४ अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ।
५४ सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ।
५५ कमेः पश्च ।
५६ गुपादिभ्यः कित् ।
५७ मिथिलादयश्च ।
५८ पतिकठिकुठिगडिगुडिदंशिभ्यः एरक् ।
५९ कुम्बेर्नलोपश्च ।
६० शदेस्त च ।
६१ मूलेरादयः ।
६२ कबेरोतच्पश्च ।
६३ भातेर्डवतुः ।
६४ कठिचकिभ्यामोरन् ।
६५ किशोरादयश्च ।
६६ कपिगडिगण्डिकटिपटिभ्य ओलच् ।
६७ मीनातेरूरन् ।
६८ स्यन्देः संप्रसारणं च ।
६९ सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ।
७० पः किच्च ।
७१ अर्तेश्च तुः ।
७२ कमिमनिजनिगाभायाहिभ्यश्च ।
७३ चायः किः ।
७४ आप्नोतेर्ह्रस्वश्च ।
७५ वसेस्तुन् ।
७६ अगारे णिच्च ।
७७ कृञः कतुः ।
७८ एधिवह्योश्च तुः ।

४० अ उ मकुर° क मकुरदुर्दुगौ च । ४१ अ क नास्ति । ५१ अ क महीत्यधिकम् । ५२ अ क अशेर्निच्च । ५४ क भडि° इत्यस्य स्थाने °भटि° इति, ०चण्डि° इत्याधिकम् । ५५ अ कबेःपश्च°। क कपंश्च । ५६–६३ गुपादिसूत्रादारभ्यैतत्सूत्रं यावत्सप्तसूत्राणि केषांचिदसंमतानीति उज्वलदत्तः॥ ५८ क पथिकाथि° इति वर्णान्तरम् । ५९ उ. कुन्वे° । ६१ क °यश्च । ६२–६३ अ क न स्तः। ६३ उ. °तुप् ६४ अ क °मोरच् । ६६ अ गण्ड इत्यस्य स्थाने कडि इति । क °गडि° इत्यस्य स्थाने °कडि° इति । चकारो न विद्यते । ६७–६८ अ क सूत्रद्वयं न विद्यते । इतपरं 'बहुलमन्यत्रापि । इत्याधिकं सूत्रम् । ७० अ क इतः परं 'मीनातेरूरन्' इति सूत्रमधिकम् । ७१ क चकारो न विद्यते । ७२ क °पा° इत्यधिकम् । ७३ अ अस्मिन् सूत्रे चकारोऽधिकः । ७५ अ वसस्तुन् ।

७९ जीवेरातुः ।
८० आतृकन्वृद्धिश्च ।
८१ कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ।
८२ मृजेर्गुणश्च ।
८३ वहो धश्च ।
८४ कषेश्छश्च ।
८५ णित्कसिपद्यर्थेः ।
८६ अणो डश्च ।
८७ नञि लम्बेर्नलोपश्च ।
८८ के श्र एरङ् चास्य ।
८९ त्रो दुट् च ।
९० दरिद्रातेर्यालोपश्च ।
९१ नृतिशृध्योः कूः ।
९२ ऋतेरम्च ।
९३ अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ।
९४ मृग्रोरुतिः ।
९५ ग्रो मुट् च ।
९६ हृषेरुलच् ।
९७ हृसृरुहियुषिभ्य इतिः ।
९८ ताडेर्णिलुक् च ।
९९ शमेर्ढः ।
१०० कमेरठः ।
१०१ रमेर्वृद्धिश्च ।
१०२ शमेः खः ।
१०३ कणेष्ठः ।
१०४ कलस्तृपश्च ।
१०५ शपेर्वश्च ।
१०६ वृषादिभ्यश्चित् ।
१०७ मृजेष्टिलोपश्च ।
१०८ चुपेरच्चोपधायाः ।
१०९ शकिशम्योर्नित् ।
११० छो गुक् ह्रस्वश्च ।
१११ ञमन्ताड्डः ।
११२ कादिभ्यः कित् ।
११३ स्थाचतिमृजेरालज्वालञालीयचः ।
११४ पतिचण्डिभ्यामालञ् ।
११५ तमिविशिबिडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् ।
११६ पतेरङ्गच्पक्षिणि ।
११७ तरत्यादिभ्यश्च ।
११८ विडादिभ्यः कित् ।
११९ सृवृञोर्वृद्धिश्च ।
१२० गन्गम्यद्योः ।
१२१ छापूखडिभ्यः कित् ।
१२२ भृञः किन्नुट् च ।
१२३ शृणातेर्ह्रस्वश्च ।
१२४ गणशकुनौ ।
१२५ मुदिग्रोर्गग्गौ ।

---

८२ अ क इतः परमाधिकं सूत्रम् खडेश्च । उ. खडेर्डुवा । इदं सूत्रं न संमतं सर्वत्रेति उज्वलदत्तः । ८३ अ उ. वहेर्धश्च । ९१ अ वृतिशृध्योः कू । ९३ उ. °दन्कू° °जम्बूकम्बू° दिधिषु । ९५ अ क गमुट् च । ९८ अ तारेर्णिलुक् च । ९९ अ शणेर्ढः । क षणेडः । १०१–१०३ अ न सन्ति । १०९ अ इतः-परमाधिके सूत्रे भ्रमिमस्योरुच्चोपधायाः । कणेष्ठः । क एतस्मात् सूत्रद्वयात् 'कम्बलादयश्च' इत्यधिकम् । ११० क नास्ति । ११३ अ °लीयरः । क °लया° ११५ अ क नास्ति । ११६ अ इतः परं सर्तेर्णित् । गन्गम्यदेः । इति सूत्रद्वयमधिकम् । ११७–१२१ अ न सन्ति । १२१ क नास्ति । १२५ अ मुदिग्रोर्गद्गौ ।

१२६ अण्डन्कृसृभृवृञः ।

१२७ शृदृभसोऽदिः ।

१२८ दृणातेः षुक् ह्रस्वश्च ।

१२९ त्यजितनियजिभ्यो डित् ।

१३० एतेस्तुट् च ।

१३१ सर्तेरटिः ।

१३२ लङ्घेर्नलोपश्च ।

१३३ पारयतेरजिः ।

१३४ प्रथः कित्संप्रसारणं च ।

१३५ भियः षुक् ह्रस्वश्च ।

१३६ युष्यसिभ्यां मदिक् ।

१३७ अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।

१३८ जहातेः सन्वदालोपश्च ।

१३९ अवतेष्टिलोपश्च ।

१४० ग्रसेरा च ।

१४१ अविसिविसिशुषिभ्यः कित् ।

१४२ इषियुधीन्धिदसिश्याधूसूभ्यो मक् ।

१४३ युजिरुचितिजां कुश्च ।

१४४ हन्तेर्हि च ।

१४५ भियः षुग्वा ।

१४६ घर्मः ।

१४७ ग्रीष्मः ।

१४८ प्रथेः षिवन्संप्रसारणं च ।

१४९ अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् ।

१५० इण्शीभ्यां वण् ।

१५१ सर्वनीघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अस्वतन्त्रे ।

१५२ शेवयह्वजिह्वाग्रीवाप्वामीवाः ।

१५३ कृगृशृदृभ्यो वः ।

१५४ कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ।

१५५ सप्यशूभ्यां तुट् च ।

१५६ नञि जहातेः ।

१५७ श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति ॥

इत्युणादिषु प्रथमः पादः ॥

---

१५८ कृहृभ्यामेणुः ।

१५९ हनिकुषिनीरमिकाशिभ्यः क्थन् ।

१६० अवे भृञः ।

१६१ उषिकुषिगार्तिभ्यस्थन् ।

१६२ सर्तेर्णित् ।

---

१२८ अ इतः परमधिकं सूत्रद्वयम् । तथाहि- एतेस्तुट् च । त्विषिमिषिभ्यां च । १३० अ अत्रत्यमुपरि वर्तते । १३३ अ क उ. पारेराजिः । १३४–१३६ न सन्ति । १३६ क नास्ति । १३७ अ क °वा° इति न विद्यते । १३८ क नास्ति । १४० असतेरा च । उ. °रात् । १४१° सि° न विद्यते । १४३ अ क कुत्वं चेति । १४४ उ. हनेर्हि च । १४६–१४७ क सूत्रद्वयोरैक्यम् । १५० उ.वन् । १५१ अ सर्वनिघृष्वर्श्वलष्वाशिवपद्वप्रह्वेष्वा अतन्त्रे इति पाठः । क- °लष्वप्रह्वेष्वा अतन्त्रे । उ. अतन्त्रे । १५२ अ क शेवायव्हा° । १५४ इतःपरं 'पञ्चेश्च' इत्यधिकं सूत्रम् । १५५ उ. नास्ति । १५६ अ नास्ति । इतःपरमाधिकं सूत्रद्वयम्- नुदंशेर्गुणश्च । सहेःषष् लुक् च । १६१ क °गार्तिकनिभ्य° । १६२ अ अत्रत्यमर्तोणिरी(१६५) त्वस्याग्रे दृश्यते । उ. णिच्च ।

